ज्येष्ठाद्यं पञ्चर्क्षं क्षुत्तस्कररोगदं प्रबाधयते । काश्मीरान् दरदान् मत्स्यान् सचारुदेवीमवन्तींश्च ॥ १८ ॥
आरोहेऽप्याभीरान् द्रविडाम्बष्ठत्रिगर्तसौराष्ट्रान् । नाशयति सिन्धुसौवीरकांश्च काशीश्वरस्य वधः ॥ १९ ॥
षष्ठं षण्नक्षत्रं शुभमेतन्मण्डलं धनिष्ठाद्यम् । भूरिधनगोकुलाकुलमनल्पधान्यं क्वचित् सभयम् ॥ २० ॥
अथारोहे शूलिकगान्धारावन्त्यः प्रपीड्यन्ते । वैदेहवधः प्रत्यन्तयवनशकदासपरिवृद्धिः ॥ २१ ॥

\+ + +

प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा । केशास्थिशकलचला कापालमिव व्रतं धत्ते ॥ २५ ॥
सौम्योपगतो रससस्यसङ्क्षयायोशना समुद्दिष्टः । आर्द्रागतस्तु कोशलकलिङ्गहा सलिलनिकरकरः ॥ २६ ॥
अश्मकवैदर्भाणां पुनर्वसुस्थे सिते महाननयः । पुष्ये पुष्टा वृष्टिर्विद्याधरगणविमर्दश्च ॥ २७ ॥
आश्लेषासु भुजङ्गमदारुणपीडावहश्चरन्शुक्रः । भिन्दन् मघां महामात्यदोषकृद्भूरिवृष्टिकरः ॥ २८ ॥
भाग्ये शबरपुलिन्दप्रध्वंसकरोऽम्बुनिवहमोक्षाय । आर्यम्णे कुरुजाङ्गलपाञ्चालघ्नः सलिलदायी ॥ २९ ॥
कौरवचित्रकराणां हस्ते पीडा जलस्य च निरोधः । कूपकृद्दण्डजपीडा चित्रास्थे शोभना वृष्टिः ॥ ३० ॥
स्वातौ प्रभूतवृष्टिर्दूतवणिग्नाविकान् स्पृशत्यनयः । ऐन्द्राग्नेऽपि सुवृष्टिर्वणिजां च भयं विजानीयात् ॥ ३१ ॥
मैत्रे क्षत्रविरोधो ज्येष्ठायां क्षत्रमुख्यसन्तापः । मौलिकभिषजां मूले त्रिष्वपि चैतेष्वनावृष्टिः ॥ ३२ ॥
आप्ये सलिलजपीडा विश्वेशे व्याधयः प्रकुप्यन्ति । श्रवणे श्रवणव्याधिः पाषण्डिभयं धनिष्ठासु ॥ ३३ ॥

शतभिषजि शौण्डिकानामजैकपे द्यूतजीविनां पीडा ।
कुरुपाञ्चालानामपि करोति चास्मिन् सितः सलिलम् ॥ ३४ ॥
अहिर्बुध्न्ये फलमूलतापकृद्यायिनां च रेवत्याम् ।
अश्विन्यां हयपानां याम्ये तु किरातयवनानाम् ॥ ३५ ॥

\+ + +

सौम्योऽस्तोदययोः पुरो भृगुसुतस्यावस्थितस्तोयकृत्
रोगान् पित्तजकामलां च कुरुते पुष्णाति च ग्रैष्मिकम् ।
हन्यात् प्रव्रजिताग्निहोत्रिकभिषग्रङ्गोपजीव्यान् हयान्
वैश्यान् गाः सह वाहनैर्नरपतीन् पीतानि पश्चाद्दिशाम् ॥ ४३ ॥
शिशिरमयमनलाभे शस्त्रकोपश्च रक्ते कनकनिकषगौरे व्याधयो दैत्यपूज्ये ।
हरितकपिलरूपे श्वासकासप्रकोपः पतति न सलिलं खाद्भस्मरूक्षासिताभे ॥ ४४ ॥

## अध्याय १०

यदा विशाखासु महेन्द्रमन्त्री सुतश्च भानोर्दहनर्क्षयातः ।
तदा प्रजानामनयोऽतिघोरः पुरप्रभेदो गतयोर्भमेकम् ॥ १९ ॥

\+ + +

वैडूर्यकान्तिरमलः शुभदः प्रजानां बाणातसीकुसुमवर्णनिभश्च शस्तः ।
यञ्चापि वर्णमुपगच्छति तत्सवर्णान् सूर्यात्मजः क्षपयतीति मुनिप्रवादः ॥ २१ ॥

## अध्याय ११

ह्रस्वस्तनुः प्रसन्नः स्निग्धस्त्वृजुरचिरसंस्थितः शुक्लः ।
उदितो वाप्यभिदृष्टः सुभिक्षसौख्यावहः केतुः ॥ ८ ॥

\+ + +

स्निग्धाः प्रभासमेता द्विशिखाः षष्टिः शनैश्चरात्मजाः । अतिकष्टफला दृश्याः सर्वेऽप्येते कनकसंज्ञाः ॥ १८ ॥

\+ + +

कंका नाम वरुणजा द्वात्रिंशद्वंशगुल्मसंस्थानाः । शशिवत् प्रभासमेतास्तीव्रफलाः केतवः प्रोक्ताः ॥ २६ ॥
षण्णवतिः कालसुताः कबन्धसंज्ञाः कबन्धसंस्थानाः ।
पुण्ड्रा भयप्रदाः स्युः रूपताराश्च ते शिखिनः ॥ २७ ॥

\+ + +

स्निग्धौ सुभिक्षशिवदावथाधिकं दृश्यते कनामा यः । दश वर्षाण्युपतापं जनयति शस्त्रप्रकोपकृतम् ॥३८॥

\+ + +

जलकेतुरपि च पश्चात् स्निग्धः शिखयाऽपरेण चोन्नतया ।
नव मासान् स सुभिक्षं करोति शान्तिं च लोकस्य ॥ ४६ ॥

\+ + +

अश्विन्यामश्मकपं भरणीषु किरातपार्थिवं हन्यात् ।
बहुलासु कलिङ्गेशं रोहिण्यां शूरसेनपतिम् ॥ ५४ ॥
औशीनरमपि सौम्ये जलजाजीवाधिपं तथाऽऽर्द्रासु ।
आदित्येऽश्मकनाथं पुष्ये मगधाधिपं हन्ति ॥ ५५ ॥
असिकेशं भौजङ्गे पित्र्येऽङ्गं पाण्ड्यनाथमपि भाग्ये ।
औज्जयनिकसार्यम्णे सावित्रे दण्डकाधिपतिम् ॥ ५६ ॥
चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत्तज्ज्ञः ।
काश्मीरककाम्बोजौ नृपती प्राभञ्जने न स्तः ॥ ५७ ॥
इक्ष्वाकुरलकनाथौ हन्येते यदि भवेद्विशाखासु ।
मैत्रे पुण्ड्राधिपतिर्ज्येष्ठास्वथ सार्वभौमवधः ॥ ५८ ॥

---

## अध्याय १७

आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनापसव्यैः ।
युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥ २ ॥

\+ + +

रविराक्रन्दो मध्ये पौरः पूर्वेऽपरे स्थितो यायी ।
पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रन्दः ॥ ६ ॥
केतुकुजराहुशुक्रा यायिन एते हता ग्रहा हन्युः ।
आक्रन्दयायिपौरान् जयिनो जयदाः स्ववर्गस्य ॥ ७ ॥
पौरे पौरेण हते पौराः पौरान् नृपान् विनिघ्नन्ति ।
एवं याय्याक्रन्दौ नागरयायिग्रहाश्चैव ॥ ८ ॥
दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य संनिवृत्तोऽणुः ।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः ॥ ९ ॥
उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः ।
विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः ॥ १० ॥

\+ + +

गुरुणा जितेऽवनिसुते बाह्लीका यायिनोऽग्निवार्ताश्च ।
शशिजेन शूरसेनाः कलिङ्गसाल्वाश्च पीड्यन्ते ॥ १३ ॥
सौरेणारे विजिते जयन्ति पौराः प्रजाश्च सीदन्ति ।
कोष्ठागारम्लेच्छक्षत्रियतापाश्च शुक्रजिते ॥ १४ ॥
भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः ।
उत्तरदिक्स्थाः क्रतुदीक्षिताश्च सन्तापमायान्ति ॥ १५ ॥
गुरुणा बुधे जिते म्लेच्छशूद्रचौरार्थयुक्तपौरजनाः ।
त्रैगर्तपार्वतीयाः पीड्यन्ते कम्पते च मही ॥ १६ ॥
रविजेन बुधे ध्वस्ते नाविकयोधाब्जसधनगर्भिण्यः ।
भृगुणा जितेऽग्निकोपः सस्याम्बुदयायिविध्वंसः ॥ १७ ॥
जीवे शुक्राभिहते कुलूतगान्धारकैकया मद्राः ।
शाल्वा वत्सा वङ्गा गावः सस्यानि नश्यन्ति ॥ १८ ॥

भौमेन हते जीवे मध्यो देशो नरेश्वरा गावः ।
सौरेण चार्जुनायनवसातियौधेयशिबिविप्राः ॥ १९ ॥
शशितनयेनापि जिते बृहस्पतौ म्लेच्छसत्यशस्त्रभृतः ।
उपयान्ति मध्यदेशश्च संक्षयं यच्च भक्तिफलम् ॥ २० ॥
शुक्रे बृहस्पतिहते यायी श्रेष्ठो विनाशमुपयाति ।
ब्रह्मक्षत्रविरोधः सलिलं च न वासवस्त्यजति ॥ २१ ॥
कोशलकलिङ्गवङ्गा वत्सा मत्स्याश्च मध्यदेशयुताः ।
महतीं व्रजन्ति पीडां नपुंसकाः शूरसेनाश्च ॥ २२ ॥
कुजविजिते भृगुतनये बलमुख्यवधो नरेन्द्रसंग्रामाः ।
सौम्येन पार्वतीयाः क्षीरविनाशोऽल्पवृष्टिश्च ॥ २३ ॥
रविजेन सिते विजिते गणमुख्याः शस्त्रजीविनः क्षत्रम् ।
जलजाश्च निपीड्यन्ते सामान्यं भक्तिफलमन्यत् ॥ २४ ॥
असिते सितेन निहतेऽर्घवृद्धिरहिविहगमानिनां पीडा ।
क्षितिजेन टंकणान्ध्रौड्रकाशियाह्लीकदेशानाम् ॥ २५ ॥
सौम्येन पराभूते मन्देऽश्मकवणिग्विहङ्गपशुनागाः । सन्ताप्यन्ते गुरुणा स्त्रीबहुला महिषकशकाश्च ॥ २६ ॥

## अध्याय २१

यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत् स चन्द्रवशात् । पञ्चनवते दिनशते तत्रैव प्रसवमायाति ॥ ७ ॥
सितपक्षभवाः कृष्णे शुक्ले कृष्णा द्युसम्भवा रात्रौ । नक्तंप्रभवाश्चाहनि सन्ध्याजाताश्च सन्ध्यायाम् ॥ ८ ॥

\+ \+ \+

ह्लादि मृदूदक्शिवशक्रदिग्भवो मारुतो वियद्विमलम् ।
स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ ॥ १४ ॥
पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम् । काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम् ॥ १५ ॥
सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यका शुभा सन्ध्या ।
शशिशिवशक्राशास्थाः शान्तरवाः पक्षिमृगसंघाः ॥ १६ ॥

\+ \+ \+

पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः । घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे ॥ २२ ॥
मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासः । जलचरसत्त्वाकारा गर्भेषु घनाः प्रभूतजलाः ॥ २३ ॥

\+ \+ \+

गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः । क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः ॥ २५ ॥
रुधिरादिवृष्टिवैकृतपरिघेन्द्रधनूंषि दर्शनं राहोः । इत्युत्पातैरेभिस्त्रिविधैश्चान्यैर्हतो गर्भः ॥ २६ ॥

\+ \+ \+

शतभिषगाश्लेषार्द्रास्वातिमघासंयुतः शुभो गर्भः ।
पुष्णाति बहून् दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः ॥ २९ ॥

## अध्याय २३

हस्ताप्यसौम्यचित्रापौष्णधनिष्ठासु षोडश द्रोणाः । शतभिषगैन्द्रस्वातिषु चत्वारः कृत्तिकासु दश ॥ ६ ॥
श्रवणे मघानुराधाभरणीमूलेषु दश चतुर्युक्ताः । फल्गुन्यां पञ्चकृतिः पुनर्वसौ विंशतिर्द्रोणाः ॥ ७ ॥
ऐन्द्राग्न्याख्ये वैश्वे विंशतिः सार्पभे च दशत्र्यधिकाः । आहिर्बुध्न्यार्यम्णप्राजापत्येषु पञ्चकृतिः ॥ ८ ॥
पञ्चदशाजे पुष्ये कीर्तिता वाजिभे दश द्वौ च । रौद्रेऽष्टादश कथिता द्रोणा निरुपद्रवेष्वेषु ॥ ९ ॥

## अध्याय ३०

सन्ध्याकाले स्निग्धा दण्डतडिन्मत्स्यपरिघिपरिवेषाः ।
सुरपतिचापैरावतरविकिरणाश्चाशु वृष्टिकराः ॥ ८ ॥

\+ + +

ध्वजातपत्रपर्वतद्विपाश्वरूपधारिणः । जयाय सन्ध्ययोर्घना रणाय रक्तसन्निभाः ॥ २७ ॥
पलालधूमसञ्चयस्थितोपमा बलाहकाः । बलान्यरूक्षमूर्तयो विवर्धयन्ति भूभृताम् ॥ २८ ॥
विलम्बिनो द्रुमोपमाः खरारुणप्रकाशिनः । घनाः शिवाय सन्ध्ययोः पुरोपमाः शुभावहाः ॥ २९ ॥
दीप्तविहङ्गशिवामृगघुष्टा दण्डरजःपरिघादियुता च ।
प्रत्यहमर्कविकारयुता या देशनरेशसुभिक्षवधाय ॥ ३० ॥

---

## अध्याय ३३

दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः ।
धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः ॥ १ ॥
उल्का पक्षेण फलं तद्वद्धिष्ण्याशनिस्त्रिभिः पक्षैः ।
विद्युदहोभिः षड्भिस्तद्वत्तारा विपाचयति ॥ २ ॥
तारा फलपादकरी फलार्धदात्री प्रकीर्तिता धिष्ण्या ।
तिस्रः सम्पूर्णफला विद्युदथोल्काशनिश्चेति ॥ ३ ॥
अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु ।
निपतति विदारयन्ती धरातलं चक्रसंस्थाना ॥ ४ ॥
विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा ।
कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता ॥ ५ ॥

\+ + +

उल्का शिरसि विशाला निपतन्ती वर्धते प्रतनुपुच्छा । दीर्घा भवति च पुरुषं भेदा बहवो भवन्त्यस्याः ॥ ८ ॥
प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलाङ्गलमृगाभाः । गोधाहिधूमरूपाः पापा या चोभयशिरस्का ॥ ९ ॥
ध्वजझषकरिगिरिकमलेन्दुतुरगसंतप्तरजतहंसाभाः । श्रीवत्सवज्रशंखस्वस्तिकरूपाः शिवसुभिक्षाः ॥ १० ॥

\+ + +

संस्पृशती चन्द्रार्कौ तद्विसृता या सभूप्रकम्पा च । परचक्रागमनृपभयदुर्भिक्षावृष्टिभयजननी ॥ १२ ॥

\+ + +

शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी ।
क्रमशश्चैतान् हन्युर्मूर्धोरःपार्श्वपुच्छस्थाः ॥ १४ ॥
उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा ।
ऋज्वी स्निग्धा खण्डा नीचोपगता च तद्वृद्ध्यै ॥ १५ ॥
श्यामा वारुणनीलासृग्दहनासितभस्मनिभा रूक्षा ।
सन्ध्या दिनजा वक्रा दलिता च परागमभयाय ॥ १६ ॥
नक्षत्रग्रहघाते तद्भक्तीनां क्षयाय निर्दिष्टा ।
उदये घ्नती रवीन्दू पौरेतरमृत्यवेऽस्ते वा ॥ १७ ॥
भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम् ।
विप्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु ॥ १८ ॥
ध्रुवसौम्येषु नृपाणामुग्रेषु सदारुणेषु चौराणाम् ।
क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते ॥ १९ ॥

---

## अध्याय ३५

चापशिखिरजततैलक्षीरजलाभः स्वकालसम्भूतः।
अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः ॥ ४ ॥
सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः।
असकलशकटशरासनशृङ्गाटकवत् स्थितः पापः ॥ ५ ॥
शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो भयं धूम्रे।
हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि ॥ ६ ॥

\+ \+ \+

प्रतिदिनमर्कहिमांश्वोरहर्निशं रक्तयोर्नरेन्द्रवधः।
परिविष्टयोरभीक्ष्णं लग्नास्तनभःस्थयोस्तद्वत् ॥ ९ ॥
सेनापतेर्भयकरो द्विमण्डलो नातिशस्त्रकोपकरः।
त्रिप्रभृति शस्त्रकोपं युवराजभयं नगररोधम् ॥ १० ॥
वृष्टिस्त्र्यहेण मासेन विग्रहो वा ग्रहेन्दुभनिरोधे।
होराजन्माधिपयोर्जन्मर्क्षे वाशुभो राज्ञः ॥ ११ ॥
परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः।
जनयति च वातवृष्टिं स्थावरकृषिकृन्निहन्ता च ॥ १२ ॥
भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम्।
जीवे परिवेषगते पुरोहितामात्यनृपपीडा ॥ १३ ॥
मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च।
शुक्रे यायिक्षत्रियराज्ञां पीडाप्रियं चान्नम् ॥ १४ ॥
क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ।
परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च ॥ १५ ॥

\+ \+ \+

याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः।
प्रलयमिव विद्धि जगतः पञ्चादिषु मण्डलस्थेषु ॥ १७ ॥

## अध्याय ३६

उदगादिपुरोहितनृपबलपतियुवराजदोषदं खपुरम्।
सितरक्तपीतकृष्णं विप्रादीनामभावाय ॥ १ ॥
नागरनृपतिजयावहमुदग्विदिक्स्थं विवर्णनाशाय।
शान्तायां दृष्टं सतोरणं नृपतिविजयाय ॥ २ ॥
सर्वदिगुत्थं सततोत्थितं च भयदं नरेन्द्रराष्ट्राणाम्।
चौराटविकान् हन्याद् धूमानलशक्रचापाभम् ॥ ३ ॥
गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्।
दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥ ४ ॥
अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम्।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा ॥ ५ ॥

## अध्याय ४६

यानत्रेरुत्पातान् गर्गः प्रोवाच तानहं वक्ष्ये। तेषां संक्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः ॥ १ ॥
अपचारेण नराणामुपसर्गः पापसञ्चयाद्भवति। संसूचयन्ति दिव्यान्तरिक्षभौमास्तदुत्पाताः ॥ २ ॥
मनुजानामपचारादपरक्ता देवताः सृजन्त्येतान्। तत्प्रतिघाताय नृपः शान्तिं राष्ट्रे प्रयुञ्जीत ॥ ३ ॥

दिव्यं ग्रहर्क्षवैकृतमुल्कानिर्घातपवनपरिवेषाः । गन्धर्वपुरपुरन्दरचापादि यदान्तरिक्षं तत् ॥ ४ ॥
भौमं चरस्थिरभवं तच्छान्तिभिराहतं शममुपैति । नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके ॥ ५ ॥
दिव्यमपि शममुपैति प्रभूतकनकान्नगोमहीदानैः । रुद्रायतने भूमौ गोदोहात् कोटिहोमाच्च ॥ ६ ॥
आत्मसुतकोशवाहनपुरदारपुरोहितेषु लोकेषु । पाकमुपयाति दैवं परिकल्पितमष्टधा नृपतेः ॥ ७ ॥
अनिमित्तभङ्गचलनस्वेदाश्रुनिपातजल्पनाद्यानि । लिङ्गार्चायतनानां नाशाय नरेशदेशानाम् ॥ ८ ॥
दैवतयात्राशकटाक्षचक्रयुगकेतुभङ्गपतनानि । सम्पर्यासनसादनसङ्गाश्च न देशनृपशुभदाः ॥ ९ ॥
ऋषिधर्मपितृब्रह्मप्रोक्तं वैकृतं द्विजातीनाम् । यद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् ॥ १० ॥

गुरुसितशनैश्चरोत्थं पुरोधसां विष्णुजं च लोकानाम् ।
स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्राणाम् ॥ ११ ॥

वेदव्यासे मन्त्रिणि विनायके वैकृतं चमूनाथे । धातरि सविश्वकर्मणि लोकाभावाय निर्दिष्टम् ॥ १२ ॥
देवकुमारकुमारीवनिताप्रेष्येषु वैकृतं यत्स्यात् । तन्नरपतेः कुमारककुमारिकास्त्रीपरिजनानाम् ॥ १३ ॥
रक्षःपिशाचगुह्यकनागानामेतदेव निर्देश्यम् । मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः ॥ १४ ॥
दृष्ट्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः । स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत् प्रतिमाम् ॥ १५ ॥
मधुपर्केण पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत् । स्थालीपाकं जुहुयाद्विधिवन्मन्त्रैश्च तल्लिङ्गैः ॥ १६ ॥

इति विबुधविकारे शान्तयः सप्तरात्रं द्विजविबुधगणार्चा गीतनृत्योत्सवाश्च ।
विधिवदवनिपालैर्यैः प्रयुक्ता न तेषां भवति दुरितपाको दक्षिणाभिश्च रुद्धः ॥ १७ ॥

राष्ट्रे यस्यानग्निः प्रदीप्यते दीप्यते च नेन्धनवान् । मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया ॥ १८ ॥
जलमांसार्द्रज्वलने नृपतिवधः प्रहरणे रणो रौद्रः । सैन्यग्रामपुरेषु च नाशो वह्नेर्भयं कुरुते ॥ १९ ॥
प्रासादभवनतोरणकेत्वादिष्वनलेन दग्धेषु । तडिता वा षण्मासात् परचक्रस्यागमो नियमात् ॥ २० ॥

धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निकं महाभयदम् ।
व्यभ्रे निशि उडुनाशो दर्शनमपि चाह्नि दोषकरम् ॥ २१ ॥

नगरचतुष्पादाण्डजमनुजानां भयकरं ज्वलनमाहुः । धूमाग्निविस्फुलिङ्गैः शय्याम्बरकेशगैर्मृत्युः ॥ २२ ॥
आयुधज्वलनसर्पणस्वनाः कोशनिर्गमनवेपनानि वा ।
वैकृतानि यदि वाऽऽयुधेऽपराण्याशु रौद्ररणसंकुलं वदेत् ॥ २३ ॥
मन्त्रैर्वाह्नैः क्षीरवृक्षात्समिद्भिर्होतव्योऽग्निः सर्षपैः सर्पिषा च ।
अग्न्यादीनां वैकृते शान्तिरेवं देयं चास्मिन् काञ्चनं ब्राह्मणेभ्यः ॥ २४ ॥

शाखाभङ्गेऽकस्माद्वृक्षाणां निर्दिशेद्रणोद्योगम् । हसने देशभ्रंशं रुदिते च व्याधिबाहुल्यम् ॥ २५ ॥
राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीव कुसुमिते बाले । वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति ॥ २६ ॥
मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगः । स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले ॥ २७ ॥
शुष्कविरोहे वीर्यान्नसंक्षयः शोषणे च विरुजानाम् । पतितानामुत्थाने स्वयं भयं दैवजनितं च ॥ २८ ॥
पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय निर्दिष्टम् । धूमस्तस्मिन् ज्वाला वाऽथवा भवेन्नृपवधायैव ॥ २९ ॥
सर्पत्सु तरुषु जल्पत्सु वाऽपि जनसंक्षयो विनिर्दिष्टः । वृक्षाणां वैकृत्ये दशभिर्मासैः फलविपाकः ॥ ३० ॥

स्रग्गन्धधूपाम्बरपूजितस्य च्छत्रं निधायोपरि पादपस्य ।
कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षडङ्गहोमः ॥ ३१ ॥
पायसेन मधुना च भोजयेद् ब्राह्मणान् घृतयुतेन भूपतिः ।
मेदिनी निगदितात्र दक्षिणा वैकृते तरुकृते महर्षिभिः ॥ ३२ ॥

\+ \+ \+

दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम् । रोगो ह्यनृतुभवायां नृपवधोऽनभ्रजातायाम् ॥ ३८ ॥
शीतोष्णविपर्यासे नो सम्यगृतुषु च सम्भृतेषु । षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च ॥ ३९ ॥
अन्यर्तौ सप्ताहं प्रबन्धवर्षे प्रधाननृपमरणम् । रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः ॥ ४० ॥
धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात् । अङ्गारपांसुवर्षे विनाशमायाति तन्नगरम् ॥ ४१ ॥
उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः । छिद्रं वाप्यतिवृष्टौ सस्यानामीतिसञ्जननम् ॥ ४२ ॥

क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णवारिणां वर्षे । देशविनाशो ज्ञेयोऽस्मवर्षे चापि नृपयुद्धम् ॥ ४३ ॥
यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा । देशस्य तदा सुमहद्भयमायातं विनिर्देश्यम् ॥ ४४ ॥
व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथवा रात्रौ । प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत् ॥ ४५ ॥

सूर्येन्दुपर्जन्यसमीरणानां योगः स्मृतो वृष्टिविकारकाले ।
धान्यान्नगोकाञ्चनदक्षिणाश्च देयास्ततः शान्तिमुपैति पापम् ॥ ४६ ॥

अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते । शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम् ॥ ४७ ॥
स्नेहासृङ्मांसवहाः संकुलकलुषाः प्रतीपगाश्चापि । परचक्रस्यागमनं नद्यः कथयन्ति षण्मासात् ॥ ४८ ॥
ज्वालाधूमक्वाथा रुदितोत्क्रुष्टानि चैव कूपानाम् । तमजल्पितानि च जनमरकाय प्रदिष्टानि ॥ ४९ ॥
तोयोत्पत्तिरखाते गन्धरसविपर्यये च तोयानाम् । सलिलाशयविकृतौ वा महद्भयं तत्र शान्तिरियम् ॥ ५० ॥
सलिलविकारे कुर्यात् पूजां वरुणस्य वारुणैर्मन्त्रैः । तैरेव च जपहोमं शममेव पापमुपयाति ॥ ५१ ॥
प्रसवविकारे स्त्रीणां द्वित्रिचतुष्प्रभृतिसम्प्रसूतौ वा । हीनातिरिक्तकाले च देशकुलसंक्षयो भवति ॥ ५२ ॥
वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम् । षण्मासात्सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ ॥ ५३ ॥
नार्यः परस्य विषये त्यक्तव्यास्ता हितार्थिना । तर्पयेच्च द्विजान् कामैः शान्तिं चैवात्र कारयेत् ॥ ५४ ॥
चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनं यूथमन्यथा हि विनाशयेत् ॥ ५५ ॥

परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् ।
उक्षाणो वान्योऽन्यं पिबति श्वा वा सुरभिपुत्रम् ॥ ५६ ॥

मासत्रयेण विद्यात् तस्मिन्निःसंशयं परागमनम् । तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ ॥ ५७ ॥
त्यागो विवासनं दानं तत्तस्मात् शुभं भवेत् । तर्पयेद्ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् ॥ ५८ ॥
स्थालीपाकेन धातारं पशुना च पुरोहितः । प्राजापत्येन मन्त्रेण यजेद्बहुदक्षिणाम् ॥ ५९ ॥
यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च वाहयुतम् । राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे च ॥ ६० ॥

अनभिहततूर्यनादः शब्दो वा ताडितेषु यदि न स्यात् ।
व्युत्पत्तौ वा तेषां परागमो नृपतिमरणं वा ॥ ६१ ॥

गीतरवतूर्यनादा नभसि यदा च चरस्थिरान्यत्वम् । मृत्युस्तदा गदा वा विस्वरतूर्ये पराभिभवः ॥ ६२ ॥
गोलांगूलयोः सक्ते दर्वीशूर्पाद्युपस्करविकारे । क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् ॥ ६३ ॥
वायव्येष्वेषु नृपतिर्वायुं सक्तुभिरर्चयेत् । आ वायोरिति पञ्चर्चो जप्याश्च प्रयतैर्द्विजैः ॥ ६४ ॥
ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत् । बहुधनदक्षिणा होमाः कर्तव्याश्च प्रयत्नतः ॥ ६५ ॥

पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम् ।
नक्तं वा दिवसचराः क्षपाचरा वा चरन्त्यहनि ॥ ६६ ॥

सन्ध्याद्वयेऽपि मण्डलमाबध्नन्तो मृगा विहङ्गा वा । दीप्तायां दिश्यथवा क्रोशन्तः संहता भयदाः ॥ ६७ ॥
श्वानः प्ररुदन्त इव द्वारे वसन्ति जम्बुका दीप्ताः । प्रविशेन्नरेन्द्रभवने कपोतकः कौशिको यदि वा ॥ ६८ ॥
कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापाः । प्रतिलोममण्डलचराः श्येनाद्याश्चाम्बरे भयदाः ॥ ६९ ॥
गृहचैत्यतोरणेषु द्वारेषु च पक्षिसंघसम्पाताः । मधुवल्मीकाम्भोरुहसमुद्भवाश्चापि नाशाय ॥ ७० ॥
श्वभिरस्थिशवावयवप्रवेशनं मन्दिरेषु मरकाय । पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम् ॥ ७१ ॥
मृगपक्षिविकारेषु कुर्याद्धोमान् सदक्षिणान् । देवाः कपोत इति च जप्तव्याः पञ्चभिर्द्विजैः ॥ ७२ ॥
सुदेवा इति चैतेन देया गावश्च दक्षिणा । जपेच्छाकुनसूक्तं वा मनोवेदशिरांसि च ॥ ७३ ॥

* *
*

ज्योतिषं केवलं कालं वास्तु-दिव्येन्द्रसंपदां[1] । लक्षणं व्यञ्जनं चिह्नं[2] लग्न-दिव्यौषधानि च[3] ॥ १८
बला-ऽबलं [illegible] सर्वेषां विरोधं च पराजयम् । तत् सर्वमानुपूर्व्येण प्रब्रवीहि महामते[4] ! ॥ १९
सर्वानेतान् यथोद्दिष्टान् भगवन् ! वक्तुमर्हसि । प्रश्नं शुश्रूषवः सर्वे वयमन्ये च साधवः ॥ २०

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते ग्रन्थाङ्ग[5]संचयो नाम प्रथमोऽध्यायः ॥

ततः प्रोवाच भगवान् दिग्वासाः[6] श्रमणोत्तमः । यथावच्छास्त्रविन्यासं[7] द्वादशाङ्गविशारदः ॥ १
भवद्भिर्यदहं पृष्टो निमित्तं जिनभाषितम् । समास-व्यासतः सर्वं तन्निबोध[8] यथाविधि ॥ २
प्रकृतेर्योऽन्यथाभावो विकारः सर्व उच्यते । एवं विकारं[9] विज्ञेयं भयं तत् प्रकृतेः सदा[10] ॥ ३
उल्कानां प्रभवं रूपं प्रमाणं फलमाकृतिः । यथार्थं[11] संप्रवक्ष्यामि तन्निबोधत तत्त्वतः[12] ॥ ४
भौतिकानां शरीराणां स्वर्गात् प्रच्यवतामिह । संभवश्चा[13]ऽन्तरिक्षे[14] तु तज्ज्ञैरुल्केति संज्ञिता ॥ ५
तत्र तारा तथा धिष्ण्यं विद्युच्चाशनिभिः सह । उल्काविकारा बोद्धव्या ते पतन्ति[15] निमित्ततः ॥ ६
ताराणां च प्रमाणं तु[16] धिष्ण्यं तद् द्विगुणं भवेत् । विद्युद्विशाल-कुटिला रूपतः क्षिप्रचारिणी ॥ ७
अशनिश्चक्रसंस्थाना दीर्घा भवति रूपतः । पौरुषी तु भवेदुल्का प्रपतन्ती विवर्धते ॥ ८
चतुर्भागफला तारा धिष्ण्यमर्धफलं भवेत् । [ †रक्ताः पि(पी)तास्तु मध्यास्तु श्वेताः
स्निग्धास्तु पूजिताः ] पूजिताः पद्मसंस्थाना माङ्गल्यास्ताश्च[17] पूजिताः ॥ ९
पापाः पापफलं[18] दद्युः शिवाश्चापि शिवं फलम् । व्यामिश्राश्चापि व्यामिश्रं येषां यैः प्रतिपुद्गलाः ॥ १०
इत्येतावत् समासेन प्रोक्तमुल्कासुलक्षणम् । पृथक्त्वेन प्रवक्ष्यामि लक्षणं व्यासतः पुनः ॥ ११

## ॥ इत्युल्कालक्षणो[19] द्वितीयोऽध्यायः ॥

नक्षत्रं यस्य पर्युंसः[20] पूर्णमुल्का प्रताडयेत् । भयं तस्य भवेद् घोरं यतस्तत्[21] कम्पते हतं[22] ॥ १
अनेकवर्णनक्षत्रमुल्का हन्युर्यदा समाः । तस्य देशस्य तावन्ति[23] भयान्युग्राणि निर्दिशेत् ॥ २
येषां वर्णेन संयुक्ता सूर्यादुल्का प्रवर्तते । तेभ्यः संजायते तेषां भयं येषां[24] दिशं[25] पतेत् ॥ ३
नीलाः पतन्ति या उल्काः सस्यं सर्वं विनाशयेत् । त्रिवर्णा त्रीणि घोराणि भयान्युल्का निवेदयेत् ॥ ४
विकीर्यमाणा कपिला विशेषं वामसंस्थितौ[26] । खण्डा भ्रमन्त्यो[27] विकृताः[28] सर्वा उल्का भयावहाः ॥ ५
उल्काऽशनिश्च धिष्ण्यं च प्रपतन्ति यतोमुखाः । तस्यां दिशि विजानीयात् ततो भयमुपस्थितम् ॥ ६
सिंह-व्याघ्र-वराहोष्ट्र-द्वीपि-श्वान-खरोपमाः । शूल[29]-पट्टिशसंस्थाना धनु-र्बाण-गदादिभिः[30] ॥ ७
पाश-वज्रासि[31]-सदृशाः परश्व-र्धेन्दु[32]संनिभाः । श्वान-मार्जारसदृशाः पक्षि[33]कर्द[34]मसंनिभाः ॥ ८
गोधा[35]-सर्प-शृगालानां सदृशाः शल्यकस्य च । मेषाजै[36]-महिषाकाराः काकाऽऽकृतिवृकोपमाः ॥ ९

---

1 A वसुदिव्येंद्रसंपद, C वासुदेवेन्द्र° । 2 A च्छिद्रं । 3 C तथा दिव्यौषधानि च । 4 A महाप्रप°, B महत्तमः । 5 A अङ्गसंचयो । 6 A C दिग्वासा श्रवणो° । 7 B C यथावस्थानु वि° । 8 B D निबोधय । 9 A विकारो विज्ञेयः । 10 A स प्रकृतेरन्यथागमः । 11 B यथावस्थं प्र° । 12 B वत्सः । 13 A संभवाश्चान्तरि° । 14 A C °रिक्षं । 15 B C D निपतन्ति । 16 A C तारणां । * B आदर्शे एवैषं कोष्ठकगता पंक्तिरुपलभ्यते । 17 A D मांगल्यान्ताश्च । 18 A पापयोपफले; C पापयो-रफलं । 19 A B °लक्षणे; C लक्षणं । 20 C °पुंसस्तूर्णं° । 21 A यतस्तत्र । 22 A D हतः । 23 B वर्तन्ति । 24 B येषां । 25 C दिशि । 26 B C वामकस्थिताः । 27 C भ्रमन्त° । 28 C विकृताः । 29 A मूल° । 30 A गदाकाराः; C गदामयाः । 31 C °वज्राणि । 32 A परस्वर्वेन्दुः; C परशुर्वृ° । † This second half is not found in B and D. । 33 B, C, and D पक्षिणः । 34 B, C, and कूर्म° । 35 A गोधा । 36 D मेषाजै ।

ऋक्ष-वानरसंस्थानाः कबन्धसदृशाश्च याः । अलातं-चक्रसदृशा वज्राक्षप्रतिमाश्च याः ॥ १०
हस्ति-लाङ्गलसंस्थाना यस्याश्चोर्भयतः शिराः । सा खन्यमाना नागाभाः प्रयतन्ति स्वभावतः ॥ ११
उल्काऽशनिश्च विद्युश्च संपूर्णं कुरुते फलम् । पतन्ती[10] जनपदा श्रीणि उल्का तीव्रं प्रबाधते[11] ॥ १२
यथावदनुपूर्वेण तत् प्रवक्ष्यामि[12] तत्त्वतः । अंमतो देशमार्गेण मध्येनानन्तरं[15] ततः ॥ १३
पुच्छेन पृष्ट(ष्ठ)तो देशं पतन्त्युल्का विनाशयेत् । मध्यमा न प्रशस्यन्ते नमस्युल्काः पतन्ति याः ॥ १४
स्नेहवत्यो[19]ऽन्यगामिन्यो प्रशस्ताः स्युः प्रदक्षिणाः । उल्का यदि पतेदिग्नौ पक्षिणीमहितायै सा ॥ १५
श्याम-लोहितवर्णा या सद्यः कुर्याद् महद्भयम् । उल्कायां भस्मवर्णायां परचक्राऽऽगमो[23] भवेत् ॥ १६
अग्निमग्निप्रभा कुर्याद् व्याधिं[25] माञ्जिष्ठसंनिभा । नीला कृष्णा च धूम्रा च शुक्ला याऽसिसमद्युतिः ॥
उल्का नीचैः समा स्निग्धा पतन्ति(न्ती) भयमादिशेत् ॥ १७
शुक्ला रक्ता च पीता च कृष्णा चापि यथाक्रमम् । चा(च)तुर्वर्णा[31] विभक्त्या साधुनोक्ता यथाक्रमम् ॥ १८
उदीच्यां ब्राह्मणान् हन्ति प्राच्यामपि च क्षत्रियान् । वैश्यान् निहन्ति याम्यायां प्रतीच्यां शूद्रघातिनी ॥ १९
उल्का रूपेण वर्णेन स्वं स्वं वर्णं प्रबाधते[35] । स्निग्धा चैवानुलोमा च प्रसन्ना च न बाधते ॥ २०
यां चादित्यात् पतेदुल्का वर्णतो वा दिशोऽपि वा । तं तं वर्णं निहन्त्याशु वैश्वानर इवार्चिभिः ॥ २१
अनन्तरां[37] दिशं दीप्ता येषामुल्काऽग्रतः पतेत् । तेषां स्त्रियश्च गर्भाश्च भयमिच्छन्ति दारुणम् ॥ २२
कृष्णा नीला च रूक्षाश्च प्रतिलोमाश्च गर्हिताः । पशु-पक्षिसुसंस्थाना भैरवाश्च भयावहाः ॥ २३
अनुगच्छति या उल्का बाह्या तूल्का समन्ततः । वर्णानुसारिणी नाम सा तु राष्ट्रं विनाशयेत् ॥ २४
रक्ता पीता नभस्युल्काः श्वेनपाककेन संनिभाः । अन्येषां गर्हितानां च सत्त्वानां सदृशास्तु याः ॥ २५
उल्कास्ता न प्रशस्यन्ते निपतन्त्यः सुदारुणाः । यासु प्रपतमानासु मृगा विविधमानुषाः ॥ २६
शब्दं मुञ्चन्ति दीप्तासु दिक्षु मासमकाम्यथी । क्रव्यादाश्चाऽऽदौ दृश्यन्ते[48] या रता विकृताश्च याः ॥ २७
सधूम्रा याः सनिर्घाता उल्काश्चायामुयुः । सभूमिकंपाः परुषा रजस्विन्यो[46] ऽपसव्यगाः ॥ २८
महानादित-चन्द्रो च याः स्पृशन्ति दहन्ति वा । परचक्रभयं[57] घोरं[58] क्षुधा-व्याधि-जनक्षयम् ॥ २९
एवंलक्षणसंयुक्ताः कुर्वन्त्युल्का महाभयम् । अष्टापदवदुल्काभिर्दिशं[61] पश्येद् यदाऽऽवृताम् ॥ ३०
युगान्तं इति विन्द्यात् भद्रबाहुवचो यथा । पद्म-श्री-वृक्ष-चन्द्रार्क-नन्द्यावर्त्त-घटोपमाः ॥ ३१

---

1 C not found । 2 A °साराम° । 3 C D कव्वादा । 4 C °सदृशा । 5 C सुवाः । 6 C °संकाशा । 7 C याशांठो° । 8 B शून्यमाना; D शून्यमान । 9 B नागोभाः । * D श्वेनपक्षीकसन्निभा. । 10 A C पतति । 11 A B प्रयोधते । 12 B प्रवक्षामि । † Sts from this are numbered as 11, 12 etc in C. 13 B देश° । 14 A °मार्गेण । 15 C D °नोतरतः । 16 D गुरः । 17 B विनाशये । 18 A °नि । 19 AB स्नेहवंतो । 20 A पदे पित्राः C पतेतत्र; D पतपित्रा । 21 A D दक्षिणा । 22 C °महताय । 23–24 A वर्णाय, B °वर्णाभा । 25 B °वक्रगमो । 26 B व्याधि । 27 C °संप्रभा । 28–29 C °तृतिवर्णा । 30 A समस° । ‡ B एवद्रमं यदाऽऽदिशेत; D पतेद्रपं यदाऽऽदिशेत । 31 B °वर्णो । 32 A तु सत्त्व; B D रक्षेत । 33 A च । 34 A प्रबाधते । 35–36 D पात्पादित्यात् । 37 B अनन्तरं, C अनन्तरा, D अनेन यां । 38 B स्त्रिया; C स्त्रियं । 39–40 C गुणर्भिता । 41 A °पक्षमु-संस्थाना, C °पापसंस्था । 42 B सर्वगता । 43 A यथा° । ¶ This first half is missing in D. 44 C पुमत्याशु । 45 B चहसंनेव; C श्वेनाः स्त्रियाय । 46 C सृजिताः । 47–48 A चयः । 49 A प्रपतमानासु । 50 B मानुष° । 51 A° कामया । 52 C च° । 53 C °मानन्ते । 54 A रात° । 55 A °सदृशा, C सततयमाः । 56 A B C °चक्रं । 57 B भुरमय । 58 C it is not found in this Ms. 59–60 A एवदद्या° । 61 B C D दिशं । 62 BC °वृतम्; D °वृतम् । 63 C युगांत । 64 BD विन्धत । § A B D पद्मापाद्योपत्मयते । 65 B यथा । 66 B चंद्र is twice found in this Ms before and after वृक्ष ।

वर्धमानध्वजाकारा पताका-मत्स्य-कूर्मवत् । वाजि-वारणरूपाश्च शङ्ख-वादित्र-छत्रवत् ॥ ३२
सिंहासन-रथाकारा रूप्यपिण्डव्यवस्थिताः । रूपैरेतैः प्रकाशन्ते सुर्लभमुल्काः समाहिताः ॥ ३३
नक्षत्राणि विमुञ्चन्त्यः स्निग्धाः प्रत्युत्तमाः शुभाः । सुवृष्टिं क्षेममारोग्यं सस्यसंपत्तिरुत्तमाः ॥ ३४
सोमो राहुश्च शुक्रश्च केतुर्भौमश्च यायिनः । बृहस्पतिर्बुधः सूर्यः सौरिश्चाऽपीह नागराः ॥ ३५
हन्युर्मध्येन सा उल्का ग्रहाणां[13] नाम[14] विद्युता[15] । सनिर्घोषा[16] सधूम्रा वा तत्र विन्द्यादिदं फलम् ॥ ३६
नगरेषूपसृष्टेषु नागराणां महद्भयम् । याम्येष्वनुपसृष्टेषु[19] यायिनां[20] तद्भयं भवेत् ॥ ३७
सन्ध्यायां रोहिणी पौष्णं चित्रां त्रीण्युत्तराणि च । मैत्रं चोल्का यदा हन्यात् तदा स्यात् पार्थिवाद् भयम् ॥ ३८
वायव्यं वैष्णवं पुष्यं यद्युल्काभिः प्रताडयेत् । ब्रह्म-क्षत्रभयं विन्द्याद् राज्ञश्च भयमादिशेत् ॥ ३९
यथा ग्रहं तथा ऋक्षं चातुर्वर्ण्यं विभावयेत् । अतः परं प्रवक्ष्यामि सेनासूल्का यथाविधि ॥ ४०
सेनायास्तु समुद्योगे[25] राज्ञां विवदमानयोः । उल्का यदा पतन्तीति तदा वक्ष्यामि लक्षणम् ॥ ४१
छन्दयेत् सोममर्कं[29] वा यद्युल्कां संविदारयेत् । स्थावराणां विपर्यासं अस्मिन्नुत्पातदर्शने ॥ ४२
अस्तं यातमथाऽऽदित्यं सोमं चोल्का लिखेद् यदा । आगन्तुर्वध्यते सेना यथादेशं यथाऽऽगमम् ॥ ४३
उद्गच्छत्सोममर्कं वा यद्युल्का प्रतिलोमतः । प्रविशेन्नागराणां स्याद् विपर्यासस्तथागते ॥ ४४
एवैवास्तगते[32] उल्का आगन्तूनां भयं भवेत् । प्रतिलोमा भयं कुर्याद् यथास्तं चन्द्र-सूर्ययोः ॥ ४५
उदये भास्करस्योल्का याऽग्रतोऽभिप्रसर्पति । सोमस्यापि जयं कुर्यादेषां पुरस्सरा स्मृतिः[34] ॥ ४६
सेनामभिमुखी भूत्वा यद्युल्का प्रतिदृश्यते । प्रतिसेनावधं विन्द्यात्तस्मिन्नुत्पातदर्शने ॥ ४७
अथ यद्युभयां सेनामेकैकं प्रतिलोमतः । उल्का तूर्णं प्रपद्येत उभयत्र भयं भवेत् ॥ ४८
येषां सेनासु निपतेदुल्का नीला महाप्रभा । सेनापतिवधस्तेषामचिरात् संप्रजायते ॥ ४९
उल्कास्तु लोहिताः सूक्ष्माः पतन्त्यः पृतनां प्रति । यस्य राज्ञः प्रपद्यन्ते कुमारो हन्ति तं नृपम् ॥ ५०
उल्कास्तु बहवः पीताः पतन्त्यः पृतनां प्रति । पृतनां व्याधितां प्राहुस्तस्मिन्नुत्पातदर्शने ॥ ५१
§बहुशाम्यः(?) प्रपद्येरन् उल्काः श्वेताः समंततः । ब्राह्मणेभ्यो भयं घोरं तस्य सैन्यस्य निर्दिशेत् ॥ ५२
उल्का व्यूहेष्वनीकेषु या पतेत्तिर्यगागता । न तदा जायते युद्धं परिघा नाम सा भवेत् ॥ ५३
उल्का व्यूहेष्वनीकेषु पृष्ठतोऽपि पतन्ति याः । ॥क्षय-व्ययेन पीड्येरन्नुभयोः सेनयोर्नृपाः(पान्) ॥ ५४
उल्का व्यूहेष्वनीकेषु प्रतिलोमाः पतन्ति याः । संग्रामेषु निपतन्ति जायन्ते किंशुका वनाः ॥ ५५

1 A वाश्च । 2 A स्वस्यासन°; BD स्वस्यासन । 3 B °पिंडि°; C विधान । 4 BD °व्यवस्थिताः C भवनोपमा । 5 BCD प्रकाशंते । 6 A सर्व सर्व; C सम्यक् । 7 A विमुञ्चन्ते । 8 D प्रत्युत्तमा । 9 A चोऽपि नः; C चोतिनः । 10 A सौरि; D सौर । 11–12 A श्चावल्याश्चयः । 13 C ग्रहवेला°; D ग्रहवेला । 14 CD it is not found in these Mss. 15 C सविद्युता°; D सविद्युतः । 16 A सनिर्घोषा । 17 D नागरेषु । 18 A उपसृष्टेषु । 19 A यायिष्टाः; BD यायिषु । 20 A यायिनां । 21 A रात्री । 22-23 A चोमयदा; B चोमयदो । 24 B °छत्र° । 25 A चतुर्योगे । 26 C राज्ञां । 27 C चेव शुभाशुभं । 28 A छन्दयः; C छन्दच्छन्त । 29 C सोमार्क । 30 ABD यद्युल्काभिः । 31 ABD विदारयेत् । * C सिमं°न्यवचनं यथा । 32 A पर्वतास्तमने, C एवैवास्तमनं । 33 A पि । 34 BD this is not found in these Mss. 35 A विद्यात् । 36 C सेना । 37 C प्रतिपते । 38 A उल्का is twice found in this Ms. 39 C नीला । 40 C महा° । 41 C °वधं । 42 C विंद्यात् । 43 C रुधिरः । 44 C द्रवतां । † C रोगव्याधि समादध्यात् तस्मिन्नुत्पातदर्शने । ‡ C this stanza is not found in this Mss. $ ABD संघातानुपद्येत उल्कास्तेषां च शुभति । ¶ ABD या पतन्ति च सायकाः । § A परिधानमस्याः स्मृतम् । ‖ ABD क्षयं व्ययं वाप्नुवन्त्युभयोरपि सेनयोः । 45 A पृष्ठतो । 46 A निपतन्ति । 47 A या । 48–49 C रक्तकुंभाः; D केसु कानना ।

उल्का यत्र समायान्ति यथाभावे तथासु च । येषां मध्यान्तिकं[*] यान्ति तेषां स्याद्विजयो ध्रुवम् ॥ ५६
चतुर्दिक्षु यदा पृतना उल्का गच्छन्ति संततम्[1] । चतुर्दिशं तदा[2] यान्ति भयान्युग्राणि[3] संचरीः ॥ ५७
अग्रतो[4] या पतेदुल्का[5] सा सेना तु[6] प्रशस्यते । तिर्यक् संचरते[7] मार्गं[8] प्रतिलोमा[9] भयावहा ॥ ५८
यतः सेनामभिपतेत्[10] तस्यं सेनां प्रबाधयेत् । विजयं तु समाख्याति येषां सोल्का पुरःसरा[†] ॥ ५९
छिन्नरूपा[11] नृपतये[12] यन्थ[13] मुल्का प्रदापयेत्[14] । प्रतिलोमा विलोमा प्रतिराज्ञो[15] भयं सृजेत्[16] ॥ ६०
यस्यापि जन्मनक्षत्रं उल्का गच्छेच्छरोपमा[17] । विदारणा तस्य वाच्या व्याधिना वर्णसङ्करैः ॥[¶] ६१
उल्का येषां यथारूपा दृश्यते प्रतिलोमतः । तेषां ततो भयं विन्यादनुलोमा शुभागमम् ॥ ६२
उल्का यत्र प्रसर्पन्ति भ्राजमाना दिशोदिशम् । सप्तरात्रान्तरं[20] वर्षं दशाहाद्[21]दुत्तरं भयम् ॥ ६३
पापासूल्कासु वर्षतु[22] यदा देवः प्रवर्षति[23] । प्रशान्तं तद्भयं विन्याद् भद्रबाहुवचो यथा ॥ ६४
यथातिवृष्टिः[24] स्निग्धा[25] च दिशि शान्ता पतन्ति याः । उल्कास्तासु भवेत् क्षेमं सुभिक्षं[26] मन्दरोगवान्[27] ॥ ६५
यथामार्गं यथावृद्धिं यथाद्वारं यथाऽऽगमम् । यथाविकारं विज्ञेयं ततो ब्रूयाच्छुभा-ऽशुभम् ॥ ६६
तिथिश्च करणं चैव नक्षत्राश्च मुहूर्ततः । ग्रहाश्च शकुनाश्चैव दिशो वर्णाः प्रमाणतः ॥ ६७
निमित्तादनुपूर्वाश्च पुरुषा(?) कालतो बलात् । प्रभावाश्चागतिश्चैवमुल्कानां फलमादिशेत् ॥ ६८
एतावदुक्तमुल्कानां लक्षणं जिनभाषितम् । परिवेषान् प्रवक्ष्यामि तान्निबोधत तत्त्वतः ॥ ६९

॥ इति भद्रबाहुसंहितायां तृतीयोऽध्यायः[28] ॥

---

अथातः संप्रवक्ष्यामि परिवेषान् यथाक्रमम् । प्रशस्तानप्रशस्तांश्च यथावदनुपूर्वशः[29] ॥ १
पञ्च प्रकारा विज्ञेयाः पञ्च वर्णाश्च भौतिकाः । ग्रह-नक्षत्रयोः कालं परिवेषाः[30] समुत्थिताः[31] ॥ २
रूक्षाः खण्डाश्च वामाश्च क्रव्यादायुधसंनिभाः । अप्रशस्ताः[32] प्रकीर्त्यन्ते[33] विपरीतगुणान्विताः ॥ ३
रात्रौ तु संप्रवक्ष्यामि प्रथमं तेषु लक्षणम् । ततः पश्चाद्दिवा भूयो तन्निबोध[35] यथाक्रमम्[36] ॥ ४
क्षीर-शङ्खनिभश्चन्द्रे[37] परिवेषो[38] यदा[39] भवेत् । तदा क्षेमं सुभिक्षं च राज्ञो[40] विजयमादिशेत् ॥ ५
सर्पिस्तैलनिकाशस्तु परिवेषो यदा भवेत् । *न चाऽऽकृष्टोऽतिमात्रं च महामेघस्तदा भवेत्* ॥[§] ६
रूप्य-पारावतामश्च[43] परिवेषो यदा भवेत् । महामेघास्तदामीक्ष्णं[44] तर्पयन्ति जलैर्महीम् ॥ ७

* C मनुष्कृत्य सुभर्तसा । 1 A स्तरं । 2 A चोपपत्तिके । 3 C संचता; D संततः । 4 A B D यदा । 5 A तुगत°; B तुमन; D चगण । 6 A B संचसः । 7 A B अप्रतो । 8 D पतत्युल्का । 9 C D सु° । 10 A स्तानरथेः; B मानरथे । 11 A प्रतिलोमो । 12 A B मभिपतति । † A तस्य सेनामतो जयः; BD तस्य सेनामयो जयः । ‡ A B D तं विजयं कुर्यात्तेषां पतेत्सोल्का यदा पुरा । 13 A पूर्व क्षीरूप°; B पूर्व धीरूपा; D पूर्वरूपा । 14 A °तेय । 15 A °दद; B °दय; C येव । 16 A B प्रदापयेत् । 17 A च नृपति°; B च नृपती । 18 A भवेत्; C भयहती । 19 A स्वरो°; C D शरो । ¶ C विदार्य-मागाचासला तस्य पीडा समादिशेत् । 20 C सप्ताहभ्यंतरे । 21 A देशासा; C दशना । 22 D राज्यसु । 23 A प्रवर्षंति । 24 A °मिवृत्या; B D °तिवृष्या । 25 A B स्निग्धार; D स्निग्धा । 26 C समुभिक्ष । 27 C °मरोगता । 28 B उल्काध्यायः तृतीयः; C उल्कालक्षणं तृतीयाध्यायः । 29 A B D °पूर्वतः । 30 B परिवेषा । 31 B सुसंस्थिताः । 32 A चाता । 33 C प्रशस्ता । 34 C न प्रशस्यंते । 35 A B D निरोधित । 36 C it is not found in this Ms. । 37 C निरोधत । 38 D पतता । 39 C °निरोधतश्च । 40 C it is not found in this Ms. । 41 C परिवेषे । 42 A यथा । § C This second half is not found in this Ms. The next stanza also is not found. 43 D राज्ञः । 44 D तस्य । 45 C °धारा । 46 C °प्रभावश्च । 47 A B D °वेषः । 48 C क्षीरं ।

इन्द्रायुधसवर्णस्तु[1] परिवेषो यदा भवेत् । सङ्ग्रामं तत्र जानीयाद् वर्षं[2] चापि जलागमम्[3] ॥ ८
कृष्णे नीले[4] ध्रुवं वर्षं पीते तु व्याधिमादिशेत् । *रूक्षे भस्मनिभे चापि दुर्वृष्टि[5]र्भयमादिशेत् ॥ ९
यदा तु सोममुदितं परिवेषो रुणद्धि हि । जीमूतवर्ण[6]स्निग्धश्च महामेघस्तदा भवेत् ॥ १०
अभ्युन्नतो यदा श्वेतो रूक्षः सन्ध्यानिशाकरः । अचिरेणैव कालेन राष्ट्रं चौरैर्विलुप्यते ॥ ११
चन्द्रस्य[7] परिवेषस्तु सर्वरात्रं यदा भवेत् । शस्त्रं जनक्षयं चैव तस्मिन् देशे विनिर्दिशेत् ॥ १२
भास्करं तु यदा रूक्षः परिवेषो रुणद्धि हि । तदा मरणमाख्याति नागरस्य[8] महीपतेः ॥ १३
आदित्यपरिवेषस्तु यदा सर्वदिनं भवेत् । क्षुद्भयं जनमारिश्च शस्त्रकोपं च निर्दिशेत् ॥ १४
हरिते[9] सर्वसस्यानामीतिर्भवति[10] दारुणा । वृक्ष-गुल्म-लतानां च †वर्त्तनीनां[11] तथैव च ॥ १५
यतः खण्डस्तु दृश्येत ततः प्रविशते परैः[12] । प्रयत्नं[13] तत्र[14] कुर्वीत[15] रक्षणे पुर-राष्ट्रयोः ॥ १६
रक्तो[16] वा यदाऽभ्युदितं[17] कृष्णपर्यन्त एव च[18] । परिवेषो रविं[19] रुन्ध्याद्[20] राज[21]व्यसनमादिशेत् ॥ १७
यदा त्रिवर्ण[22]पर्यन्तं[23] परिवेषो दिवाकरम् । तद्राष्ट्र[24]मचिरात् कालाद् दस्युभिः[25] परिलुप्यते[26] ॥ १८
हरितो नीलपर्यन्तः परिवेषो यदा भवेत् । आदित्ये यदि वा सोमे राज[27]व्यसनमादिशेत् ॥ १९
दिवाकरं बहुविधः[28] परिवेषो रुणद्धि हि । राष्ट्रक्षोभो भवेत् तस्य भयं मरण[29]मादिशेत् ॥ २०
‡यदाभिमुच्यते[30] शीघ्रं दिवसैश्चा[31]भिवर्धते[32] । भयं विलोपमपि च तस्य राष्ट्रस्य निर्दिशेत् ॥ २१
अंशुमाली[33] यदा तु स्यात् परिवेषः समन्ततः । तदा सपुरराष्ट्रस्य देशस्य रुजमादिशेत् ॥ २२
ग्रह-नक्षत्र-चन्द्राणां परिवेषः प्रगृह्यते[34] । अभीक्ष्णं यत्र वर्तते(र्तेत?)तं देशं परिवर्जयेत् ॥ २३
परिवेषो विरुद्धेषु नक्षत्रेषु ग्रहेषु च । कालेषु वृष्टिर्विज्ञेया भयमन्यत्र[35] निर्दिशेत्[36] ॥ २४
अभ्रशक्तिर्यतो गच्छेत् तां[37] दिशं[38] त्वभियोजयेत्[39] । रक्तां[40-41] वा विपुलां चापि जयं कुर्वन्ति शाश्वतम्[42] ॥ २५
यदाऽभ्रशक्तिर्दृश्येत परिवेष[43]समन्विता[44] । नागरा यायिनो[45] हन्युस्तदा यत्नेन संयुगे ॥ २६
नानारूपो यदा दण्डः परिवेषं[46] प्रमर्दति[47] । नागरास्तत्र वध्यन्ते[48] यायिनो[49] नात्र संशयः ॥ २७
त्रिकोणो[50] यदि दृश्येत परिवेषः[51] कथञ्चन । त्रिभागश[52]स्यैर्वध्योऽसाविति निर्ग्रन्थशासने ॥ २८
चतुरस्रो यदा चापि परिवेषः प्रकाशते । क्षुधया व्याधिभिश्चापि चतुर्भागो विशिष्यते ॥ २९
अर्धचन्द्रनिकाशस्तु परिवेषो रुणद्धि[53] हि[54] । आदित्यं[55] यदि वा सोमं[56] राष्ट्रं सङ्कुलतां व्रजेत् ॥ ३०
प्राकारा[57]ट्टालिका[58]प्रख्यैः[59] परिवेषो रुणद्धि हि । आदित्यं यदि वा सोमं पुररोधं निवेदयेत् ॥ ३१

1 A B °सुवर्णः । 2 C वर्षः । 3 C °गमे । 4 B D नील । * Before this there is one more line in C which is as under:—वास्त्रप्रतिमतस्तु महामेघस्तदा भवेद् । 5 A D दुर्वृष्टि । 6 D °वर्णः । 7 A B D चन्द्रश्च । 8 C सागरस्य । 9 B D हरते । 10 B D इतिः; C ईतिः । † C तस्मिन्नुत्पातदर्शने ॥ 11 D वर्तवार्या । 12 A अपरः । 13 A B D तत्र° । 14 A B D प्रयत्नं । 15 C कुर्वंति । 16 A रक्तं । 17 C अभ्युदयेत् । 18 D चे । 19 A B रवी, D रवि । 20 C विन्द्यात् । 21 A राजा, C राज्ञा । 22 B C D त्रिवर्णो । 23 B C D पर्यंति । 24 A तद् राष्ट्र । 25 A दिवसैव । 26 B C विलुप्यते; D परितप्यते । 27 C राजा । 28 C °विधं । † A B D भिद्यते बहुधा वापि । 29 C हरण° । ‡ C This and the following stanza are not found in C. 30 A भिमुच्यते; B भिमुच्येत । 31 B D दिव. । 32 D °भिमुच्यते । 33 B अर्थमाली; D अर्धमाली । 34 A B परिगृह्यते; C परिमर्दते । 35 B D अन्यात । 36 B D मादिशेत् । 37 A B D तं । 38 A देशं । 39 C त्रिभयोभयेत् । 40-41 B रिक्तांश; C रक्तांग; D रक्तांतं । 42 C शाश्वतः । 43 C परिवेषः । 44 C समुदिता । 45 A D यायिनो, C यायिनं । 46 B परिवेषा; C परिवेषः । 47 C D प्रमर्दते । 48 A B वर्द्धन्ते, D बध्यन्ते । 49 A B पायिनो । 50 A B D त्रिकोटिः । 51 A परिवेषं । 52 C °स्य° । 53-54 A B D प्रकाशते । 55 A आदित्ये । 56 A सोमे । 57 B D प्रकार° । 58 B °प्रवाकरु°, C D °महाफरु° । 59 C °आकारः ।

समन्ताद् वेष्टते[1] यस्तु मुच्यते च मुहुर्मुहुः । सङ्ग्रामं तत्र जानीयाद् दारुणं[2] पर्युपस्थितम्[3]* ॥ ३२
यदा ग्रहमवच्छाद्य परिवेषः प्रकाशते । अचिरेणैव कालेन सङ्कुलं[4] तत्र जायते ॥ ३३
†यदि राहुमपि ग्रामं परिवेषो रुणद्धि चेत् । तदा सुवृष्टिर्जानीयाद् व्याधिस्तत्र भयं भवेत् ॥ ३४
‡पूर्वसंध्यां[5] नागराणामागन्तूनां च पश्चिमाम्[6] । अर्धरात्रेषु राष्ट्रस्य मध्याह्ने राज्ञ उच्यते ॥ ३५
धूमकेतुं च सोमं च नक्षत्रं च रुणद्धि हि । §परिवेषो यदा राहु[7] तदा यात्रा न सिद्ध्यति ॥ ३६
यदा तु ग्रह-नक्षत्रे[8] परिवेषो रुणद्धि हि । अभावस्तस्य देशस्य विज्ञेयः पर्युपस्थितः ॥ ३७
त्रीणि यत्र[9] विरुध्यन्ते नक्षत्रं चन्द्रमा ग्रहः । त्र्यहाद्[10] वा जायते[11] वर्षं मासाद् वा जायते भयम् ॥ ३८
¶उल्कावत् साधनं ज्ञेयं परिवेषेषु[12] तत्त्वतः । $लक्षणं संप्रवक्ष्यामि विद्युता[13] तन्निबोधत ॥ ३९

॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते परिवेषो[15]ऽध्यायश्चतुर्थः ॥

अथातः संप्रवक्ष्यामि विद्युतां[16] नामविस्तरम् । प्रशस्तां[17] वाऽप्रशस्तां[18] च यथावदनुपूर्वशः[19] ॥ १
सौदामिनी च पूर्वा च कुसुमहेमोत्पला[20-22] शुभा । निरभ्रा[23] मिश्रकेशी च क्षिप्रगा चाशनिस्तथा[24] ॥ २
एतासां[25] नामनिर्वर्णं ज्ञेयं कर्मभिर्[26]निर्दिष्टैः[27] । भूयो व्यासेन वक्ष्यामि प्राणिनां पुण्यशालिनाम्[28] ॥ ३
स्निग्धास्निग्धेषु चाभ्रेषु विद्युत् प्राच्यां जलावहा । कृष्णा तु कृष्णमार्गस्था वातवर्षावहा[29] भवेत् ॥ ४
अथ रश्मिमती[30] स्निग्धा हरिता हरितप्रभा । दक्षिणा दक्षिणावर्त्ता[31] कुर्यादुदकसम्प्लवम्[32] ॥ ५
‖रश्मिमती[33] मोदिनी[34] भाति विद्युदपरदक्षिणे[35] । **हरिता भाति रोमाञ्चं[36] सोदकं[37] पातयेद्[38] बहुं[39] ॥ ६
अपरेण[40] तु या विद्युच्चरते चोत्तरामुखी । कृष्णाभ्रसंश्रिता[41] स्निग्धा साऽपि कुर्याज्जलागमम्[42] ॥ ७
††अपरोत्तरा तु या विद्युत् मन्दतोया हि सा स्मृता । उदीच्यां श्यामवर्णा[43]सा रूक्षा तु सा[44] तु[45-46] वर्षति ॥ ८
या तु पूर्वोत्तरा विद्युद् दक्षिणा[47] च पलायते । चरत्यूर्ध्वं च तिर्यग् सा साऽपि[48] श्वेता जलावहा ॥ ९
‡‡घोषोद्भवो याऽपि स्निग्धा रश्मिमती भृशम् । सघोषा चाप्यघोषा च दिक्षु सर्वासु वर्षति ॥ १०
शिशिरे चापि वर्षन्ति रक्ताः पीताश्च विद्युतः । §§नीलाः श्वेता वसन्तेषु न वर्षन्ति कथञ्चन ॥ ११
¶¶हरिता मधुवर्णाश्च ग्रीष्मे रूक्षाश्च[49] निश्चलाः । भवन्ति ताम्र[50]-गौराश्च[51] वर्षास्वपि[52] निरोधकाः ॥ १२

---

1 A B D वष्यते । 2 C नीप्र । 3 C पर्युपस्थितम् । * C भयमाख्याति दारुणम् ॥ 4 A संग्रामं । † This stanza is thus found in C –राहुणा येपदामार्द्द परिवेषो रुणद्धि हि । तदा अर्द्ध विजानीयात्तत्राधिमत्र भय भवेत् ॥ ‡ C नागरान्पूर्वसन्ध्या । 5 A °संख्या । 6 A पश्चिम ; C पश्चिम । § This line and the next line also are not found in C and D 7 A राह । 8 A °नक्षत्र । 9 A B यात्रा । 10 A त्र्यहा, B त्र्यहात् । 11 A B विजायते । ¶ This stanza is not found in B. 12 A परिवेषे तु । $ C ... लक्षण तं निबोधत ॥ 13-14 A विद्युताम् । 15 B परिवेषो°प्परणो नाम । 16 B D विद्युता । 17 C प्रशस्तान् ; D प्रशस्तम् । 18 C अप्रशस्तान् ; D अप्रशस्तम् । 19 B अनुपूर्वशः । 20–22 A B D कुसुदोत्पलनिभा । 23 C निरभ्रा । 24 C भासिनी । 25 A स्थिता, C वंधा । 26 B C D कर्मे° । 27 B C D निरक्षित । 28 B C °धारणाम्, D °पकजा । 29 C महा; D °वर्षावहा । 30 A B °मता, C °वती । 31 C °वर्त्ती । 32 A B °संभवा । ‖ C सुरश्मिकनकाभाचे । 33 B °वती । 34 B D मेदिनी । 35 B विद्युत्वापरदक्षिणे, C विद्युत्वापरदक्षिणा, D विद्युदपरदक्षिणा । ** C हरितां वा प्रभामेत् । 36 B रोमाञ्च; D रोमाञ्चा । 37 D सादिक । 38 B पतयेत; C पातयेत । 39 B C D बहुर । 40 A C अपरोद्ये । 41 B D °संश्रिता । 42 A °जलागम । †† C अपरोत्तरा मंदतोया भद्दिता सा विधीयते । 43 B D सार्वे; C सर्वे । 44 A यथात् । 45–46 D These two words are missing 47 A दक्षिणे । 48 D not found ‡‡ A वार्देभयाऽश्वापि । §§ C हेमन्ते वासन्तीषु वर्षिता विजेत्रा स्मृता ॥ ¶¶ This and the following stanza are not found in C. 49 A रक्षा । 50 D ताम्र । 51 D गौरा । 52 A B चापि ।

शारदी(द्यो) नाभिवर्षन्ति नीला वर्षाश्च विद्युतः। हेमन्ते श्यामताम्रास्तु तडितो निर्जलाः स्मृताः॥ १३
रक्तारक्तेषु चाभ्रेषु हरिताहरितेषु च। नीलानीलेषु वा स्निग्धा वर्षन्तेऽनिष्टयोनिषु॥ १४
अथ नीलाश्च[3] पीताश्च[4] रक्ताः श्वेताश्च विद्युतः। एतां[5] श्वेतां पतत्यूर्ध्वं[7] विद्युदुदकसम्प्लवम्॥ १५
वैश्वानरपथे विद्युत् श्वेता रूक्षा चरेद् यतः[10]। विन्द्यात् तदाऽशनिवर्षं[11-12] रक्तायामग्नितो भयम्॥ १६
यदा श्वेताऽभ्रवृक्षस्य विद्युच्छिरसि सञ्चरेत्। अथ वा[13] मह्योर्मध्ये वातवर्षं सृजेन्महत्॥ १७
अथ चन्द्राद् विनिष्क्रम्य विद्युन्मण्डलसंस्थिता। श्वेताऽऽभा[14] प्रविशेदर्कं विन्द्यादुदकसम्प्लवम्॥ १८
अथ[15] सूर्याद् विनिष्क्रम्य रक्ता समलिना[16] भवेत्। प्रविश्य सोमं वा तस्य[17] तत्र[18] वृष्टिर्भयङ्करा[19]॥ १९
विद्युतं[20] तु[21] यथा[22] विद्युत्[23] ताडयेत् प्रविशेदथ[24]। अन्योऽन्यं चालिखेयातां वर्षं विन्द्यात् तदाऽशुभम्[25]॥ २०
राहुणा संवृतं चन्द्रमादित्यं चापि सर्वतः[26]। कुर्याद् विद्युद् यदा[27] साभ्रा[28] तदा सस्यं न रोहति॥ २१
नीला ताम्रा च गौरी च श्वेता चाऽभ्रान्तरं चरेत्। सद्योवर्षा[29] मन्दवर्षा वा विन्द्यादुदकसङ्क्षयम्॥ २२
मध्यमे मध्यमं वर्षं अधमे[30] अधमं दिशेत्। उत्तमं चोत्तमे मार्गे चरन्तीनां च विद्युताम्॥ २३
वीथ्यन्तरेषु[31] या विद्युच्चरन्ती[32]समफलं[33] विदुः। अभीक्ष्णं दर्शयेच्चापि तत्र दूरगतं[34] फलम्॥ २४
उल्कावत् साधनं ज्ञेयं विद्युतामपि तत्त्वतः। अत्राभ्राणां[35] प्रवक्ष्यामि[36] लक्षणं[37] तन्निबोधत[38]॥ २५

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते विद्युल्लक्षणं नाम पञ्चमोऽध्यायः ॥

अभ्राणां लक्षणं कृत्स्नं[39] प्रवक्ष्यामि यथाक्रमम्। प्रशस्तमप्रशस्तं[40-41] च तन्निबोधत तत्त्वतः॥ १
स्निग्धाण्यभ्राणि यावन्ति वर्षदानि न संशयः। उत्तर मार्गमाश्रित्य तिथौ मुखे[43] यदा भवेत्॥ २
उदीच्यान्यथ पूर्वाणि वर्षदानि शिवानि[44] च। दक्षिणाण्य(न्य)पराणि स्युः समूत्राणि[45] न संशयः[46]॥ ३
कृष्णानि पीत-ताम्राणि श्वेतानि[47] च[48] यदा भवेत्। श्वयोनिदिशमासृत्य[49] वर्षदानि शिवानि[50] च॥ ४
अप्सराणां[51] च सत्त्वानां[52] सदृशानि[53] चराणि[54] च। सुस्निग्धानि च यानि स्युर्वर्षदानि शुभानि[55] च॥ ५
शुक्लानि[56] स्निग्धवर्णानि विद्युच्चित्र[57-58]-घनानि च। सद्यो वर्षं समाख्यान्ति तान्यभ्राणि न संशयः॥ ६
शकुनैः कारणैश्चापि[59] सम्भवन्ति शुभैर्यदा। तदा वर्षं च क्षेमं च सुभिक्षं च जयं भवेत्[60]॥ ७
पक्षिणां द्विपदानां च सदृशानि यदा भवेत्। चतुःपदानां[61] सौम्यानां तदा विन्द्यान्महज्जलम्[62]॥ ८
यदा राज्ञः[63] प्रयाणे[64] तु यान्त्यभ्राणि शुभानि[65] च[66]। अनुमार्गाणि[67] स्निग्धानि तदा राज्ञो जयं वदेत्[68]॥ ९

1 B चान्येषु। 2 C स्निग्ध°। 3 A not found 4 A not found 5 A श्वेता is doubly found here. 6-7 C तान्यतमत्। 8 C विद्यात्। 9-10 B च विद्युता। 11-12 B सनिर्घोष; C सनीवर्षं, D सनिव। 13 A मे, B प्रथमे। 14 C श्वेता च, D सततो। 15 C तदा। 16 C सा शालिता। 17 C नश्येत। 18 C सा तु। 19 C वृष्टि। 20 A B D विद्युत्। 21-22 A B D विद्युत्। 23 A B D पद्मामूल्या। 24 A B D तदा। 25 B C D शुभम्। 26 A सर्वतो, C सेव्यत°। 27 A B विद्युदा, C विद्युता। 28 B साचा, C साऽभ्र। 29 C अघोषा। 30 C चाऽप्यघोषा। * A B D दक्षिणाकल्पासमवे। 31 C दीर्घांतरेषु। 32 A B चर, D चारतो। 33 A वामफल, B स्यामफल, C सफल। 34 B दूरा°। 35 C अभ्राणां। 36 C समवक्ष्यामि। 37 C लक्षणानि। 38 C निबोधत। 39 C तस्य। 40 A B D प्रशस्तान्। 41 A B D अप्रशस्तान्। 42 A B D यान्। 43 A मुख्यो; C मुख्ये। 44 C शुभानि। 45 C सुमुहूर्तानि। 46 C सर्वश। 47 A स्वेतानि। 48 A not found 49 A D तयोर्निर्देश°, B तयार्देशस°। 50 A सिवानि। 51 A B D अप्सराणां। 52 A सत्तानां; B D सत्त्वानाम्। 53 B सदृशा°। 54 A B चरणानि; C अपराणि। 55 B शिवानि। 56 A शुक्लानि। 57 A B D वि°। 58 D °चित्रि°। 59 A B D करणे। 60 A वदेत्। 61 C °पदां च। 62 A B D जय वदेत्। 63 A राज°। 64 A °प्रयागे, C सप्रयाणे। 65-66 A B D शुभान्यथा। 67 C अग्र°। 68 C भवेत्।

स्वायुधानामश्वानां[1] हस्तिनां[2] सदृशानि च । यान्यग्रतो प्रधावन्ति[3] जयमाख्यान्त्युपस्थितम् ॥ १०
*ध्वजानां च पताकानां घण्टानां तोरणस्य च । सदृशान्यग्रतो यान्ति जयमाख्यान्त्युपस्थितम् ॥ ११
शुक्लानि स्निग्धवर्णानि पुरस्तात्[4] पृष्ठतोऽपि वा । अभ्राणि[5] दीप्तरूपाणि जयमाख्यान्त्युपस्थितम् ॥ १२
चतुःपदानां[6] पक्षीणां[7] क्रव्यादानां च दंष्ट्रिणाम्[8] । सदृशप्रतिलोमानि ‡वधमाख्यान्त्युपस्थितम् ॥ १३
†असि-शक्ति-तोमराणां खड्गानां चक्र-चर्मणां । सदृशप्रतिलोमानि सङ्ग्रामं तेषु निर्दिशेत् ॥ १४
धनुषां कवचानां[9] च[10] बालानां सदृशानि च । खण्डान्यभ्राणि रूक्षाणि सङ्ग्रामं तेषु[11] निर्दिशेत्[12] ॥ १५
नानारूपप्रहरणैः सर्वे यान्ति परस्परम् । सङ्ग्रामं तेषु जानीयादतुलं प्रत्युपस्थितम् ॥ १६
अभ्र-वृक्षं[13] समुच्छाद्य योऽनुलोमं[14] समं व्रजेत् । यस्य राज्ञो वधस्तस्य भद्रबाहुवचो यथा ॥ १७
बाढाऽभ्र वृक्षमरणं कुमारामात्ययोर्वदेत् । एवमेवं च विज्ञेयं प्रविराज्ञां[17] यदा भवेत् ॥ १८
तिर्यक्षु[18] यानि गच्छन्ति रूक्षाणि[19] च घनानि च । निवर्तयन्ति तान्याशु चमूं[20] सर्वां[21] सनायकाम्[22] ॥ १९
अभिद्रवन्ति घोषेण[23] महता यां चमूं पुनः । सविद्युतानि वाऽभ्राणि वदा विन्द्याच्चमूवधम् ॥ २०
रुधिरोदक-वर्णानि निर्वाणगन्धीनि यानि च । प्रजन्त्यभ्राणि अत्यन्तं[26] सङ्ग्रामं तेषु निर्दिशेत् ॥ २१
विस्वरं[27] रवमाणाश्च शकुना यान्ति पृष्ठतः । यदा[28] चाभ्राणि[29] धूम्राणि[30] तदा विन्द्यान्महद् भयम्[32] ॥ २२
मलिनानि विवर्णानि[33] दीप्तायां दिशि यानि च । दीप्तान्येव यदा यान्ति भयमाख्यान्त्युपस्थितम् ॥ २३
समहे[34] वाऽपि नक्षत्रे ग्रहयुद्धे[35] शुभे तिथौ । सम्भ्रमन्ति[37] यदाऽभ्राणि तदा विन्द्यान्महद्भयम् ॥ २४
‡मुहूर्ते शकुने वाऽपि निमित्ते वा शुभे यदा । सम्भ्रमन्ति यदाऽभ्राणि तदा विन्द्यान्महद्भयम् ॥ २५
अभ्रशक्तिर्यतो गच्छेत् तां दिशं त्वभियोजयेत् । विपुला क्षिप्रगा[38] स्निग्धा जयमाख्याति निर्भयम् ॥ २६
यदा तु धान्यसत्त्वानां[39] सदृशानि[40] भवन्ति हि । अभ्राणि तोयवर्णानि सस्यं तेषु समृद्धयति ॥ २७
निरागाण्यनुलोमानि शुक्ल-रक्तानि यानि च । §स्थावराणीति[42] जानीयात् स्थावराणां च संश्रये[44] ॥ २८
क्षिप्रगानि विलोमानि नील-पीतानि यानि च । चलानीति[45] विजानीयाच्चलानां[47] च समागमे[48] ॥ २९
स्थावराणां जयं विन्द्यात्स्थावराणां द्युतिर्यदा । यायिनां[49] च जयं विन्द्याच्चलाभ्राणां द्युतावपि ॥ ३०
राज्ञां तत्प्रतिरूपैस्तु ज्ञेयान्यभ्राणि सर्वशः । तत् सर्वं[55] सफलं[56] विन्द्याच्छुभं वा यदि वाऽशुभम् ॥ ३१

॥ इति नि(नै)र्ग्रन्थे भद्रबाहुके निमित्ते अभ्रलक्षणो नाम षष्ठोऽध्यायः ॥

---

1 B D स्वायुधानां; C यदाऽऽयुधानाम् । 2 A सस्थानाम्; B D तस्त्वानाम् । 3 C अभिधावन्ति । * C This stanza is not found in this Ms. 4 B पुरतः । 5 B अभ्राणां । 6 A °पदानां च । 7 C पक्षगां । 8 C पक्षिणां । ‡ D संग्रामं तेषु निर्दिशेत् । † This stanza is missing both in C and D. 9–10 C धनपानानां । 11 C ते । 12 C विनिर्दिशेत् । 13 A भ्रम वृक्ष; B भ्रम वृक्ष; D स्वमवृक्षः । 14 B योन्यां । 15 C °लोमं । 16 A °मभ्यक्ष°, B °भिमरणं वृक्षे, D °भागिष्ठ । 17 B प्रतिन्यानां; C प्रतिराज्ञ°; D प्रतिराज्ञा । 18 C तिर्यचि । 19 A D रूपाणि, C वृक्षाणि । 20 A येचन्; D चमु° । 21 A सर्वान्; B सर्वा; D सर्वं । 22 C च नायकां, D मिनायकां । 23 C घोरेण । 24 C विषं । 25 A B D प्रजन्त्यभ्रमतोः । 26 A B D not found. 27 A C विस्वरं । 28–29 A B D चाभ्यमाणि । 30 A B D मधूमानि । 31–32 A महाभयम्; B D भयं महत् । 33 A विवर्णानि । 34 A समाहे; B संमहे । 35 C ग्रहयुद्धे । 36 A सम । 37 C भ्रमंति । ‡ C This stanza is not found. 38 C दक्षिणा । 39 A धान्यसन्धानां । 40 A सदनानां । 41 A निरगानि । § This line as well as the next stanza are not found in B. 42 A स्थावराणां । 43 A विजानीयात् । 44 C D संश्रयेत् । 45 A चलानीति, D चलानीति । 46 D जानीयात् । 47 A चलानाम् । 48 A समागमम् । 49 A यूना° । 50 C यामिनां । 51 C वर्षां । 52 C निर्वृति° । 53 C सर्वतः । 54 C तत । 55–56 C सर्वमसं । 57 B C नृपाः ।

अथातः संप्रवक्ष्यामि सन्ध्यानां लक्षणं ततः[1] । प्रशस्तमप्रशस्तं च यथातत्त्वं निबोधत ॥ १
उद्गच्छमाने वाऽऽदित्ये यदा सन्ध्या विराजते । नागराणां जयं विन्द्यादस्तं गच्छति यायिनाम्[2] ॥ २
उद्गच्छमाने वाऽऽदित्ये शुक्ला सन्ध्या यदा भवेत् । उत्तरेण गतो[3] सौम्या ब्राह्मणानां जयं विदुः ॥ ३
उद्गच्छमाने वाऽऽदित्ये रक्ता सन्ध्या यदा भवेत् । पूर्वेण[4] च गता सौम्या क्षत्रियाणां जयावहा ॥ ४
उद्गच्छमाने वाऽऽदित्ये पीता सन्ध्या यदा भवेत् । दक्षिणेन गता सौम्या वैश्यानां सा[5] जयावहा ॥ ५
उद्गच्छमाने वाऽऽदित्ये कृष्णसन्ध्या यदा भवेत् । अपरेण गता सौम्या शूद्राणां च जयावहा[6] ॥ ६
सन्ध्योत्तरा जयं कुर्यात्[7] दक्षिणा[8] च[9] पराजयम् । पूर्वा क्षेमं सुभिक्षं च पश्चिमा तु भयङ्करा ॥ ७
आग्नेयी[10] अग्निमाख्याति नैर्ऋती शत्रुनाशिनी । वायव्या[11] वर्षणं[12] हन्यात्[13] ईशानी च शुभावहा ॥ ८
एवं संवत्सराद्येषु[14] नक्षत्रेष्वपि निर्दिशेत् । जयं सा कुरुते सन्ध्या साधकेषु समुत्थिता ॥ ९
उदयास्तमनेऽर्कस्य यान्यभ्राण्यग्रतो भवेत् । सप्रभाणि सरश्मीनि तानि सन्ध्या विनिर्दिशेत् ॥ १०
अभ्राणां यानि रूपाणि सौम्यानि विकृतानि[15] च । सर्वाणि तानि सन्ध्यायां[16] तथैव प्रतिचारयेत् ॥ ११
एवमस्तमने काले या[17] सन्ध्या[18] सर्वं उच्यते । लक्षणं यत्[19] तु[20] सन्ध्याना[21] *शुभं च यदि वाऽशुभम् ॥ १२
स्निग्धवर्णमती सन्ध्या वर्षदा सर्वशो भवेत् । सर्वा[22]वीथिगता वाऽपि सुनक्षत्री[23] विशेषतः ॥ १३
सर्वरात्रि[24]परिवेषा[25] सविद्युद्[26]परिखायुता । सरश्मी[27] सर्वशः[28] सन्ध्या[29] सद्यो वर्षं प्रयच्छति ॥ १४
प्रतिसूर्यागमस्ताश्च शक्रचाप[30]रजस्तथा । सन्ध्यायां यदि दृश्यन्ते सद्यो वर्षं प्रयच्छति ॥ १५
सन्ध्यायामेकरश्मिं तु यदा सृजति भास्करः । उदितेऽस्तमिते चापि विन्द्याद् वर्षमुपस्थितम् ॥ १६
आदित्यपरिवेषस्तु सन्ध्यायां यदि दृश्यते । वर्षं महद् विजानीयाद् भयं वाऽर्थ[31] प्रवर्षणे[32] ॥ १७
त्रिमण्डलपरिक्षिप्तो अथवा पञ्चमण्डलः । सन्ध्यायां दृश्यते सूर्यो महावर्ष[33]स्य संभवः ॥ १८
पीतयन्ती दिशः सर्वा यदा सन्ध्या प्रदृश्यते । महामेघं[34] तदा विन्द्याद् भद्रबाहुवचो यथा ॥ १९
सर-तडाग-प्रतिमा-कूप-कुम्भनिभा च या । यदा दृश्यति सुस्निग्धा सा सन्ध्या वर्षदा स्मृता[35] ॥ २०
धूमवर्णा बहुच्छिद्रा खण्डपापसमा यदा । या सन्ध्या दृश्यते नित्यं सा तु राज्ञो भयङ्करा ॥ २१
अनावृष्टिभयं रोगं[36] दुर्भिक्षं राजविद्रवम्[37] । रूक्षायां विकृतायां च सन्ध्यायां च विनिर्दिशेत् ॥ २२
द्विपदाश्चतुःपदाः क्रूराः पक्षिणस्तु भयङ्कराः । सन्ध्याया यदि दृश्यन्ते भयमाख्यान्त्युप[38]स्थितम् ॥ २३
विंशतिर्योजनानि स्युर्विद्युद्भाति च सुप्रभा । ततोऽधिकं तु स्तनितं[39] अभ्रं यत्रैव दृश्यते ॥ २४
पञ्चयोजनिका सन्ध्या वायुवर्षं च दूरतः । त्रिरात्रा(त्रं) सप्तरात्रा(त्रं) च सद्यो वा पाकमादिशेत् ॥ २५
उल्कावत् साधनं सर्वं सन्ध्यायामभिनिर्दिशेत् । अतः परं प्रवक्ष्यामि मेघानां तन्निबोधत ॥ २६

॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते सन्ध्यालक्षणं नाम सप्तमोऽध्यायः ॥

---

1 C चिह्न । 2 C जायिनाम् । 3 A गतो । 4 C च । 5 B यथावहा, C जयङ्करा । 6 B यथावहा, C जयङ्करा । 7 A B रात्र । 8-9 B सन्ध्या कुर्यात् । 10 A अग्नेद् । 11 C वर्षं । 12 C हन्याद । 13 C तु वायव्या । 14 C सपुष्करागेषु । 15 C विनतानि । 16 C सा सन्ध्या । 17-18 C यायिना । 19-21 C उदये चापि । * C स्थावराणां शुभाशुभम् ॥ 22 C सर्वं । 23 C नक्षत्राणि । 24 C साकारा । 25 C सपरिवेषा । 26 A सविद्युता । 27 C सुरश्मि । 28-29 C सर्वसन्ध्यायां । 30 A सधुव । 31-32 A चावर्षणे पुन । 33 A °वृक्षस्य । 34 A मेघा, B D °मेघ । 35 C शिवा । 36 C घोरं । 37 A C °विद्रवम्, E °विस्तरम् । 38 A विद्यात् । 39 B स्तनितं, C च तत ।

अतः परं प्रवक्ष्यामि मेघानामपि लक्षणम् । प्रशस्तमप्रशस्तं च यथावदनुपूर्वशः ॥ १
यदाञ्जननिभो मेघः शान्तायां दिशि[1] दृश्यते । स्निग्धो मन्दगतिश्चापि तदा विन्द्याज्जलं शुभम् ॥ २
शुद्धवर्णो यदा मेघः शान्तायां दिशि दृश्यते । स्निग्धो मन्दगतिश्चापि निवृत्तः स जलावहः ॥ ३
स्निग्धाः सर्वेषु वर्णेषु स्वां दिशं संस्तृता यदा । सवर्णविजयं कुर्युर्दिक्षु शान्तासु ये स्थिताः ॥ ४
यथास्थितं शुभं मेघमनुपश्यन्ति पक्षिणः[8] । जलाशया जलधरास्तदा विन्द्याज्जलं शिवम् ॥ ५
स्निग्धवर्णाश्च ये मेघा स्निग्धनादाश्च ये सदा । मन्दगाः सुमुहूर्ताश्च ते सर्वत्र जलावहाः ॥ ६
सुगन्धगन्धा ये मेघाः सुस्वराः[10] स्वादुसंस्थिताः । मधुरोदकास्[11]तु ये मेघा[12] जलार्थं[13] जलदास्तथा ॥ ७
मेघा[14] यदाऽभिवर्षन्ति प्रयाणे पृथिवीपतेः । मधुरां[15] मधुरेणैव[16] तदा सन्धिर्भविष्यति ॥ ८
पृष्ठतो वर्षतः श्रेष्ठं[17] अग्रतो विजयङ्करम् । मेघाः कुर्वन्ति ये दूरे सगर्जित-सविद्युतः ॥ ९
मेघशब्देन महता यदा निर्याति पार्थिवः । पृष्ठतो गर्जमानेन[18] तदा जयति दुर्जयम्[19] ॥ १०
मेघशब्देन महता यदा तिर्यग् प्रधावति । न तत्र जायते युद्धं[20] उभयोः परिघस्तु सः ॥ ११
मेघा यत्राभिवर्षन्ति स्कन्धावारं[23] समन्ततः । सनायकां विद्रवेत्[24] सा चमूर्नात्र संशयः ॥ १२
रूक्षां वातं प्रकुर्वन्ति व्याधयो विहगन्धिभिः । कुशब्दश्च विवर्णश्च मेघो वर्षं न कुर्वते ॥ १३
सिंहाः शृगाल-मार्जारा व्याघ्रा मेघा रुवन्ति[30] ये[31] । महता मेघशब्देन रुधिरं वर्षन्ति ते घनाः ॥ १४
पक्षिणश्चापि क्रव्यादा वा पश्यन्ति[33] समुत्थिताः । मेघास्तदाऽपि रुधिरं[34] *वर्षन्ते तत्र दर्शने ॥ १५
अनावृष्टिभयं घोरं दुर्भिक्षं मरणं[35] तथा । निवेदयन्ति ते मेघा †ये भवन्तीदृशी दिवि[37] ॥ १६
तिथौ मुहूर्तकरणे नक्षत्रे शकुनेऽशुभे[40] । सम्भवन्ति यदा मेघाः पापदास्ते भयङ्कराः ॥ १७
एवं लक्षणसंयुक्ताश्चमूं वर्षन्ति ये घनाः । चमूं सनायकां सर्वां हन्तुमाख्यान्ति सर्वतः ॥ १८
रक्तं पांशुः सधूमं वा क्षौद्रं[42] केशा-ऽस्थि-शर्कराः । मेघा वर्षन्ति विषये यस्य राज्ञो हतस्तु सः ॥ १९
क्षारं वा कटुकं वाऽथ दुर्गन्धं[44] सर्वनाशनम् । यस्मिन् देशेऽभिवर्षन्ति सं वै[46] देशो[47] विनश्यति[48] ॥ २०
प्रयातं पार्थिवं यत्र मेघश्छिन्नं[49] प्रवर्षति[50] । वित्रस्तो[51] वध्यते[52] राजा विपरीतस्तदाऽपरे ॥ २१
सर्वश्चैव प्रयाणेन नृपो येनाभिषिच्यते । रुधिरादिविशेषेण सर्वघाताय निर्दिशेत् ॥ २२
मेघाः सविद्युतश्चैव सुगन्धाः सुस्वराश्च ये । सुवेषाश्च सुवाताश्च सुधियाश्च सुभिक्षदाः ॥ २३
अभ्राणां यानि रूपाणि सन्ध्यायामपि यानि च । मेघेषु[60] तानि सर्वाणि समास-व्यासतो विदुः ॥ २४

1 BCD यदि । 2 C काशा° । 3 C विशेषः । 4 C जया° । 5 C यदा । 6 C अमं । 7 C पश्यति । 8 C दक्षिणः । 9 A B °नाया; C °शब्दा । 10 A सुखता°, C सुस्थिताः । 11 C मधुरतोयाः । 12 C शेषा । 13 C जलदा । 14 A रूपो । 15 C मधुरान् । 16 C सुस्वरान् । 17 A श्रेष्ठं; C मेघम् । 18 A गजमान; C नदमानेषु । 19 A दुर्जयः । 20 B सिद्धिम; D बुद्धिः । 21–22 B परिसेनयोः । 23 A °घामारे । 24 C °काऽपि । 25 C द्रष्टव्यम् । 26 C चमूम् । 27 A रूक्षे । 28 C विविधानि वा । 29 A यिष° । 30 A द्रवन्ति । 31 A यत् । 32 A B D भीम° । 33 B पश्यन्ते; C वाश्यन्ते; D वाश्यन्ते । 34 B रुधिर° । * C मांसं वा करकापि च ॥ B कर्कं मासमेव च ॥ D कर्कमांसमेव वा ॥ 35 A मरकं । † C ये दिशो दिशि निस्वनाः ॥ 36 B D भवन्तिदृशा । 37 A भुवि । 38 A D मुहूर्ते° । 39 C करणे । 40 A यथा; C शुभे । ‡ A अशुभे भवन्ति ये मेघा । ¶ C वीक्षयंति निसंशयः । 41 B रौद्रं । 42 C °मधु । 43 B पूरं । 44 A यस्या; B वा धन°; C not found. 45–47 A मेघा देशे । 48 C विनश्यंति सराष्ट्रकः । 49 A चत्रास्र । 50 A वर्षति । 51 A विशाम्य; B विश्रब्धो; D विश्रब्धो । 52 A वध्यते; B वध्यते । 53 A B D पुरः सरधिराद्यं च । 54 A B D सुविद्युता । 55 C सौम्याः । 56 C शुभ्राः । 57 C सवेषाः । 58 C सुवेषाः । 59 B सुधीराश्च; C वासनाः; D सुध्याया । 60 C अभ्रेषु ।

उल्कावत् साधनं ज्ञेयं[1] मेघेष्वपि तदाऽऽदिशेत् । अतः परं प्रवक्ष्यामि वातानामपि[2] लक्षणम् ॥ २५

## ॥ इति नि(नै)ग्रन्थे भद्रबाहुके निमित्ते मेघकाण्डं नामाष्टमोऽध्यायः ॥

अथातः संप्रवक्ष्यामि वातलक्षणमुत्तमम्[3] । प्रशस्तमप्रशस्तं च यथावदनुपूर्वशः ॥ १
वर्षं भयं तथा क्षेमं राज्ञो जय-पराजयम् । मारुतः कुरुते लोके जन्तूनां पुण्य-पापजम्[4] ॥ २
*आदानाच्चैव पाताच्च पच(च)नाच्च विसर्जनात् । मारुतः सर्वगर्भाणां बलवान्नायकश्च सः ॥ ३
दक्षिणस्यां दिशि यदा वायुर्दक्षिणकाष्ठिकः । †समुद्रानुशयो[9] नाम स गर्भाणां तु संभवः ॥ ४
तेन संजनितं गर्भं वायुर्दक्षिणकाष्ठिकः । धारयेद् धारणे[11] मासे पाचयेत् पाचने तथा ॥ ५
धारितं पाचितं गर्भं वायुरुत्तरकाष्ठिकः । प्रमुञ्चति ततस्तोयं वर्षतमरुतोच्यते ॥ ६
आषाढीपूर्णिमायां[12] तु पूर्ववातो यदा भवेत् । प्रया(वा)ति दिवसं सर्वं सुवृष्टिस्तु तदा[14] मता[15] ॥ ७
वाप्यानि सर्वबीजानि[16] जायन्ते निरुपद्रवम्[17] । शूद्राणामुपघाताय सोऽत्र लोके परत्र च ॥ ८
दिवसार्धं यदा याति पूर्वमासौ[18] तु सोदकौ[19] । चतुर्भागेण मासस्तु शेषं[20] ज्ञेयं[21] यथाक्रमम् ॥ ९
पूर्वार्धदिवसे ज्ञेयौ[22] पूर्वमासौ[23] तु सोदकौ[24] । पश्चिमे पश्चिमौ मासौ ज्ञेयौ द्वावपि सोदकौ ॥ १०
‡हित्वा पूर्वं तु दिवसं मध्याह्ने यदि याति[25] चेत्[26] । वायुर्मध्यममासार्थं[27] तदा मेघो[28] न वर्षति ॥ ११
आषाढीपूर्णिमायां तु दक्षिणो मारुतो यदा । न तदा वापयेत् किञ्चित् ब्रह्म-क्षत्रं च पीडयेत् ॥ १२
धन-धान्यं न[29] विक्रेयं[30] बलवन्तं च संश्रयेत् । दुर्भिक्षं मरणं[31] व्याधिश्चासं मासं प्रवर्तते ॥ १३
आषाढीपूर्णिमायां तु पश्चिमो यदि मारुतः । मध्यमं वर्षणं सस्यं धान्यार्थं मध्यमं तथा ॥ १४
उद्विजंति[32] च[33] राजानो[34] वैराणि च[35] प्रकुर्वते[36] । परस्परोपघाताय[37] स्वराष्ट्र-परराष्ट्रयोः ॥ १५
आषाढीपूर्णिमायां तु वायुः स्यादुत्तरो यदा । वापयेत् सर्वबीजानि[38] सस्यं ज्येष्ठं समृद्ध्यति[39] ॥ १६
क्षेमं सुभिक्षमारोग्यं प्रशान्ताः[40] पार्थिवास्तथा । बहूदकास्तदा मेघा मही[41] धर्मोत्सवाकुला[42] ॥ १७
आषाढीपूर्णिमायां तु वायुः स्यात् पूर्वदक्षिणः । राजमृत्युं विजानीयाच्चित्रं सस्यं तथा जलम् ॥ १८
क्वचिन्निष्प(च)ते सस्यं क्वचिच्चापि विपद्यते । धान्यार्थो मध्यमो ज्ञेयो तदाऽभेक्ष्य[47] भयं[48] नृणाम्[49] ॥ १९
आषाढीपूर्णिमायां तु वायुः स्याद् दक्षिणापरः । सस्यानामुपघाताय चौराणां तु विवृद्धये[50] ॥ २०
भस्म-पांशु-रजैस्कीर्णा[51] तदा भवति मेदिनी । सर्वत्यागं तदा कृत्वा कर्तव्यो धान्यसङ्ग्रहः ॥ २१
विद्रवन्ति च राष्ट्राणि क्षीयन्ते नगराणि च । श्वेतास्थिभिर्मेदिनी ज्ञेया मांस-शोणित-कर्दमा ॥ २२

---

1 C सर्वं । 2 C समा° । 3 B D वात° । 4 C °संक्रमम् । 5 A °पूर्वतः । 6 A °पापजाम् । C पापयोः । * A B अत्रातं चैव वातं च पाचनश्च विसर्जन°; D In addition to this line, the lin[e] that is found in A and B is also found in this Ms. 7–8 C स्मृतः । † A धारायद्धारणे [...] से । 9 B °तिमसो । 10 C मध्यम° । 11 A धारणे । 12 C आषाढ° । 13 AB पूर्णिमासी; D पौर्णमासी । 14–15 B समासदा, C समासदा; D समासदा । 16 B °जीवानि । 17 C निरुपद्रवाः । 18 A °मासे; C °मासं । 19 A C सोदकम् । 20 A ज्ञेयो; BD ज्ञेयौ । 21 A ज्ञेयो; B D ज्ञेयौ । 22 C ज्ञेयो । 23 C °मासो । 24 C सोदको । ‡ C पूर्वाण्हे प्रहरे यत्र पश्चिमेन च वाति चेत् । 25–26 A वा भवेद् । 27 C °मासो । 28 B C D देवो । 29 A ते । 30 A विक्रेय । 31 C डामरं । § C तस्कराच्च महद्भयम् । 32 A B D उद्वजन्ते 33–34 A तथा राजा; B तथा राजो, D यथा राजा । 35–36 C यदि कुर्वते; D प्रवर्तते । 37 A परस्परो यथा तोय । 38 A °जीवानि । 39 B प्रवर्धते, D प्रवर्त्तते । 40 A वसन्तो । 41 C मेहो° । 42 A D महा°; C सदा । 43 A D °कुला ; C °त्सोत्सवः । 44–45 A राज्ञो मुखं । 46–48 C [...]शे मध्यमं । 49 D भवेद् । 50 A साध्यवृत्या । 51 C °रसा° ।

आपाढीपूर्णिमायां तु वायुः स्याद्दुत्तरापरः । मक्षिको दंशमशका जायन्ते प्रबलास्तदा ॥ २३
मध्यमं कश्चिदुत्कृष्टं वर्षं सस्यं च जायते । नूनं च मध्यमं किञ्चिद् धान्यार्घं तत्र निर्दिशेत् ॥ २४
आपाढीपूर्णिमायां तु वायुः पूर्वोत्तरो[5] यदा[6] । वापयेत् सर्वबीजानि *तदा चौरांश्च घातयेत् ॥ २५
स्थलेष्वपि च यद्बीजमुप्यते तत् समृद्ध्यति । क्षेमं चैव सुभिक्षं च भद्रबाहुवचो[7] यथा ॥ २६
बहूदका सस्यवती यथोत्सवसमाकुला । प्रशान्तडिम्ब-डमरैः शुभा भवति मेदिनी ॥ २७
पूर्वो[11] वातः स्मृतः श्रेष्ठः तथा चाप्युत्तरो भवेत् । उत्तमस्तु तथैशानो मध्यमस्त्वपरोत्तरः ॥ २८
अपरस्तु तथा न्यूनः शिष्टो[18] वातः प्रकीर्तितः । पापे[20] नक्षत्र-करणे मुहूर्ते च तथा भृशम् ॥ २९
पूर्ववातं यदा हन्यादुदीर्णो दक्षिणोऽनिलः । न तत्र वापयेद् धान्यं कुर्यात् संचयमेव च ॥ ३०
दुर्भिक्षं चाप्यवृष्टिं च शस्त्रं रोगं जनक्षयम् । कुरुते सोऽनिलो घोरं आषाढाभ्यन्तरं परम् ॥ ३१
पापपाते तु पातानां श्रेष्ठं सर्वत्र चादिशेत् । श्रेष्ठानपि यदा हन्युः पापैः पापं तदाऽऽदिशेत् ॥ ३२
यदा पाताश्चत्वारो भृशं वान्त्यपसव्यतः । अल्पोदं सस्यसङ्घातं भयं व्याधिं प्रकुर्वते ॥ ३३
प्रदक्षिणं यदा वाति स एव सुरसशीतलः । क्षेमं सुभिक्षमारोग्यं राज्यवृद्धिर्जयस्तथा ॥ ३४
समन्ततो यदा यान्ति परस्परविघातिनः[31] । शस्त्रं[32] जनक्षयं[33] रोगं सस्यघातं च कुर्वते ॥ ३५
एवं विज्ञाय पातानां[34] संयतां भैक्षवर्तिनः । प्रशस्तान्यत्र पश्यन्ति[36] वसेयुस्तत्र निश्चितम्[37] ॥ ३६
आहारस्थितयः सर्वे जङ्गमस्थावरास्तथा । जलसम्भवं[38] च सर्वं तस्यापि जनतो[39]ऽ(कोऽ)निलः ॥ ३७
सर्वकालं प्रवक्ष्यामि वातानां लक्षणं[40] परम् । आषाढीवत् तत् साध्यं यत् पूर्वं सम्प्रकीर्तितम् ॥ ३८
पूर्ववातो यदा तूर्णं सप्ताहं वाति कर्कशः । स्वस्थाने नाभिवर्षेत महदुत्पद्यते भयम् ॥ ३९
प्राकार-परिखानां वा क्षेत्राणां च समन्ततः । निवेदयति राष्ट्राणां विनाशं तादृशोऽनिलः ॥ ४०
सप्तरात्रं दिनार्धं[42] च यः कश्चिद् वाति मारुतः । महद्भयं च विज्ञेयं वर्षं चाऽर्धं महद् भवेत् ॥ ४१
पूर्वसन्ध्यां यदा वायुरपसव्यं प्रवर्तते । पुरावरोधं कुरुते याथिनां[44] तु जयावहः ॥ ४२
पूर्वसन्ध्यां यदा वायुः संप्रयाति प्रदक्षिणः । नागराणां जयं[46] कुर्यात् सुभिक्षं यायि[47] विद्रवम् ॥ ४३
मध्याह्ने चार्धरात्रे च तथा चाऽस्तमनोदये । वायुस्तूर्णं यदा वाति तदाऽवृष्टिर्भयं रुजा ॥ ४४
यदा रात्रौ प्रयातस्य प्रतिलोमोऽनिलो भवेत् । अपसव्यो समार्गस्थे(स्थ)स्तदा सेनावधं[52] विदुः ॥ ४५
अनुलोमो यदा स्निग्धः संप्रवाति प्रदक्षिणः । नागराणां जयं कुर्यात्सुभिक्षं च प्रदीपयेत्[53] ॥ ४६

---

1 A °कार्ष्टं । 2 A किंचि° । 3-4 C नात्र संशयः । 5-6 A स्याद् पूर्व-उत्तरः । * C चौराणां सगुप्तकम् ॥ 7 A °वदे । 8 A तैन्यो° । 9 C प्रशान्ता । 10 C These letters are missing in this Ms. 11 C सदा । 12-13 C पूर्वोत्तरः । 14 A B D उत्तरा । 15 A परोत्तरः; C परोत्तरा । 16 C तथो । 17 A नूनं; B D नूनः । 18-19 A सम्यग्वाता; C शिष्टोवा; D शिष्टा वाताः । 20 A पापे । 21 A दक्षिणानलः; B दक्षिणोऽनलः । 22 A °पातेषु । 23 A नागरानाम् । 24 A D श्रेष्ठः । 25 A श्रेष्ठानापि । 26-27 A पापोपुपं । 28 A अपसव्यतः; C पमसव्यतः । 29 A B D °पोदकं । 30 A B D पपघातं । 31 A परिविघातिनः । 32 A सत्तं । 33 C °क्षयं । 34 C पातांस्तु । 35 C संयता । 36 C विज्ञाय । 37 C निश्चिताः । 38 B °सम्भवं । 39 C जनतो । 40-41 A B D लक्षणमित्युत । ‡ C सप्तरात्रमर्धं तथा । 42 A दिवा वार्धं; B दिवा वार्धं; D दिवा मार्धं । 43 A B D वातो । 44 A B D महान् । † A पश्चसन्ध्या हुयाद् पुरः; B पर सन्ध्या हुयाद परम्; D पश्चमस्या स्याच्छते । 45 B प्रतिलो, A चार्लिता° । 46 D सर्वं । 47 A B D यान्ति । 48 A विद्रवाम् । 49 B C D वृष्टि° । 50 A तज्ञो; C सन्तं । 51 A B D समागंस्त; C विमार्गस्थे । 52 A °वधं । ‡ C प्रतिवारेतस्य यदा स्निग्धं जयावहः ॥ 53 A D प्रदीपयन् ।

*अनुलोमाश्च शब्दश्च तदा क्षिप्रं जयावहः । दशाहं द्वादशाहं वा पापवातो यदा भवेत् ॥ ४७
अनुबन्धं तदा विन्द्याद् राजमृत्युं जनक्षयम् । †यदाऽभ्रवर्जितो वाति वायुस्तूर्णमकालजः ॥ ४८
पांशु-भस्मसमाकीर्णः सस्यघाती भयावहः । सविद्युत्सरजो वायुरूर्ध्वगो वायुभिः सह ॥ ४९
प्रवाति[1] पक्षिशब्देन क्रूरेण स भयावहः । प्रवान्ति सर्वतो वाता यदा तूर्णं मुहुर्मुहुः ॥ ५०
यतो यतोऽभिगच्छन्ति तत्र देशं निहन्ति ते । अनुलोमो यदाऽनीके सुगन्धो वाति मारुतः ॥ ५१
‡आयातश्च ततो राजा जयमाप्नोति सर्वतः । प्रतिलोमो यदाऽनीके दुर्गन्धो वाति मारुतः ॥ ५२
¶तदा यत्नेन साध्यन्ते वीरकीर्तिसुलब्धयः । यदा सपरिघा सन्ध्या पूर्वो वात्यनिलो भृशम् ॥ ५३
पूर्वस्मिन्नेव दिग्भागे पश्चिमा बध्यते चमूः । यदा सपरिघा सन्ध्या पश्चिमो वाति मारुतः ॥ ५४
§अपरस्मिन् दिशो भागे पूर्वा[3] बध्येत सा चमूः । प्रशस्तस्तु यदा वातः ‖प्रतिलोमोऽनुपद्रवः ॥ ५५
तदा यान्प्रार्थयेत् कामांस्तान् प्राप्नोति[7] नराधिपः । अप्रशस्तो यदा वायुर्**नोऽभिपश्यत्युपद्रवम् ॥ ५८
प्रयातस्य नरेन्द्रस्य चमूर्हारयते[8] तदा । तिथीनां करणानां च मुहूर्त्तानां च ज्योतिषाम् ॥ ५९
मारुतो बलवान् नेता तस्माद् यत्नेन मारुतः । वायमानेऽनिले पूर्वे[10] मेघांस्तत्र समादिशेत् ॥ ६०
उत्तरे वायमाने तु [9]जलं तत्र समादिशेत् । ईशाने वर्षणं[11] ज्ञेयमाग्नेये नैर्ऋतेऽपि च ॥ ६१
याम्ये च सङ्ग्रहं[13] ब्रूयाद् भद्रबाहुवचो यथा । सुगन्धेषु प्रशान्तेषु स्निग्धेषु मार्दवेषु च ।
वायमानेषु वातेषु सुभिक्षं क्षेममेव च ॥ ६२
महतोऽपि समुद्भूतः सतडिन् साभिगर्जितैः । मेघान्निहनते[16] वायुर्नैर्ऋतो[17] दक्षिणाग्निजः ॥ ६३
सर्वलक्षणसंपूर्णा मेघा मुख्या जलावहाः । मुहूर्त्तादुत्थितो वायुर्हन्यात् सर्वोऽपि नैर्ऋतैः ॥ ६४
सर्वथा बलवान् वायुः स्वपक्षे[19] निरभिग्रहैः । करणादिभिः संयुक्तो विशेषेण शुभा-ऽशुभः ॥ ६५

॥ इति नि(नै)र्ग्रन्थे भद्रबाहुके नैमित्ते वातलक्षणं
नाम नवमोऽध्यायः ॥

---

* The stanzas from now upto 59 are wrongly numbered as will be seen from the context. This first half should be dropped and the second half of the stanza and the first half of the succeeding stanza should form one whole st. † A B D यदापि गर्जितो वाति । 1–2 B प्रतिपक्षशब्देन । ‡ This line and the following line are not found in C. In B it is thus found:–अपं ततः ततो धर्मामाप्नोति सर्वतः ॥ ¶ This line is thus found in C:– तदा यत्नेन बध्यन्ते धरातलेषु कीर्त्तयं । § It is clear from the numbering of the stanzas that two sts. are missing in A. They are also not found in C but they are found as follows in B and D and form a regular part of the text as will be seen:–यदा सपरिखा सन्ध्या दक्षिणो वाति मारुतः...etc ॥ and यदा सपरिखा सन्ध्या उत्तरो वाति मारुतः.. etc etc. ॥ Thus there should be such stanzas to make the sense complete 3–5 A दक्षिणा बध्यते । ‖ A B D ऽभिपश्यन्त्युपद्रवम् ॥ 6 A कामाँ । 7 A माप्ते भि; C प्लवेतु ** C प्रतिलोमो विसद्रवः ॥ 8 C नानयते । 9 C पुरा. । 10 A D पूर्वे; C पूर्वो । 3 A B D तृतीया मासमिति विदुः । 11 A B D वर्षे । 12 A B D विशेयं । 13 A B D चापमह । 14 C सह गर्जितान् 15 A वामेव । 16 C विनानयेत् । 17 C निर्ऋतो । 18 A नैरित्य; B मारुतः । 19-20 A B D स्तुपक्षेनिरवग्रहः ।

अथातः संप्रवक्ष्यामि प्रवर्षणं[1] निबोधत । प्रशस्तमप्रशस्तं च यथावद[2]नुपूर्वशः[3] ॥ १
ज्येष्ठे[4] मूलमतिक्रम्य पतन्ति[5] बिन्दवो[6] यदा[7] । प्रवर्षणं तदा ज्ञेयं शुभं वा यदि वाऽशुभम् ॥ २
आषाढे[8] शुक्लपूर्वासु[9][10] ग्रीष्मे[11] मासे तु पश्चिमे । देवः[12] प्रतिपदायां[13] तु[14] यदा[15] कुर्यात् प्रवर्षणम् ॥ ३
चतुःषष्टिमाढकानि[16] तदा[17] वर्षति[18] वासवः[19] । निष्पद्यन्ते च सस्यानि सर्वाणि निरुपद्रवम् ॥ ४
धर्म-कामार्थो[20] वर्तन्ते[21] परचक्रं प्रणश्यति[22] । क्षेमं[23] सुभिक्षमा[24]रोग्यं दशरात्रं[25] त्वपमर्द[26]म् ॥ ५
उत्तरा[27]भ्यामाषाढाभ्यां[28] यदा देवः[29] प्रवर्षति[30] । विज्ञेयो[31] द्वादश द्रोणा[32] ततो वर्षं सुभिक्षदम्[33] ॥ ६
तदा निम्नानि वातानि[34] मध्यमं वर्षणं भवेत् । सस्यानां चापि निष्पत्तिः सुभिक्षं क्षेममेव च ॥ ७
श्रवणेन[35] वारि[36] विज्ञेयं[37] श्रेष्ठं सस्यं च निर्दिशेत् । चौराश्च प्रबला[38] ज्ञेया व्याधयोऽत्र पृथग्विधाः ॥ ८
क्षेत्रा[39]न्य(ण्य)त्र न रोहन्ति दष्टानां[40] नास्ति जीवितम् । अष्टादशाहं जानीयादपमर्द[41] न संशयः ॥ ९
आढकानि धनिष्ठायां[42] सप्तपञ्चा[43] समादिशेत्[44] । मही[45] सस्यवती[46] ज्ञेया[47] वाणिज्यं च विनश्यति ॥ १०
क्षेमं सुभिक्षमारोग्यं सप्तरात्र[48]मपमर्द[49]ः । प्रबला वृष्टिणो ज्ञेया मूषकाः शलभा[50]ः शुका[51]ः ॥ ११
शतभि[52]षु वारिणो[53] विद्यात्[54] सस्यानां चाप्युपद्रवम्[55] । चौरास्तु प्रबला ज्ञेया न च कश्चिदपमर्द[56]ः ॥ १२
पूर्वा[57]भाद्रपदायां[58] तु यदा मेघः[59] प्रवर्षति । चतुःषष्टिमाढकानि तदा[60] वर्षति सर्वशः[61] ॥ १३
सर्वधान्यानि जायन्ते बलवन्तश्च तस्कराः । नाणकं[62] क्षुभ्यते[63] चापि दशरात्रमपमर्द[64]ः ॥ १४
नवतिरा[65]ढकानि स्युरुत्तरायां समादिशेत् । स्थलेषु वापयेद्[66] बीजं सर्वसस्यं[67] समृद्ध्यति[68] ॥ १५
क्षेमं सुभिक्षमारोग्यं विंशद्रात्र[69]मपमर्दः । दिवसानां विजानीयाद् भद्रबाहुवचो यथा ॥ १६
चतुःषष्टि[70]माढ[71]कानीह रेवत्यामभिनिर्दिशेत्[72] । सस्यानि च समृद्ध्यन्ते[73] सर्वाण्येव यथाक्रमम् ॥ १७
उत्पद्यन्ते[74] च राजानः परस्परविरोधिनः[75] । यान्युग्यानि[76] शोभन्ते बलवं[77]दार्[78]प्रबन्धनम्[79] ॥ १८
एकोनानि[79] तु पञ्चाशदाढकानि समादिशेत् । अश्विन्यां कुरुते यत्र प्रवर्षणम[80]संशयः[81] ॥ १९
भयेते(?)[82]सुमये[83] सस्यं[84] पीड्यन्ते यवनाः शकाः । गान्धारिकाश्च काम्बोजाः[85] पाञ्चालाश्च चतुष्पदाः ॥ २०

---

1 A D प्रवर्षन्तं; B मेघवर्षं । 2 A यदा यद° । 3 A B °पूर्वसः । 4 A D ज्येष्ठो । 5 B C D पतंते । 6 A ते बिन्दवो । 7 A B D यथा । 8 A C आषाढ-- 9 C--अत्र । 10 C पूर्वा च । 11 D ग्रीष्म° । 12 C D देवः । 13-14 C प्रतिपादनेह । 15 A यदः; D यदा । 16 C °आढकानि; D °राढकानि । 17 C स्युस्तरा । 18 A वर्षन्ति । 19 B माधवः । 20 A °कामार्थं°; B °कामार्थं; C धर्मार्थकाम । 21 A D प्रवर्तन्ते । 22 C प्रनाश्यति । 23 B D सुभिक्षं । 24 B D क्षेमं । 25 C दशरात्रा । 26 A त्वम; C त्वद्° । 27 B उत्तराए; C उत्तरा । 28 B मषाढाभ्यां । 29 C देव । 30 C प्रवर्षे । 31 C विज्ञेयं । 32 B द्रोणा; C द्रोणं । 33 A सुभिक्षकम् । 34 B वाप्यानि । 35 A श्रमणेन । 36 A B D तारि । 37 A B D विज्ञेया । 38 B प्रबला । 39 A C D क्षत्राणि । 40 B न दर्प्यं; C भक्षानां । 41 C भयमहं । 42 C धनिष्ठानि । 43 A चपञ्च; C सप्तपञ्चाशतं । 44 C वदेत् । 45 A महा; C मही । 46 C °वंती; D °वता । 47 C विद्याद् । 48 C °रात्राणि । 49 A उपमर्दः । 50 B C मुळभाः; D मुळभा° । 51 A शुकाः; B D शुषाः । 52 A D शाति; B शाति । 53 A B वारुणो; D वारुणे । 54 A B D क्षेया । 55 A °प्यपद्रवम् । 56 A उपमर्दः । 57 A पूर्वे° । 58 A °भद्रपदायां । 59 B C D देवः । 60 A B स्युस्तरा । 61 A माधवः । 62 A नाणिक; B नायकं । 63 A जम्पाते । 64 A °मुपमर्दः । 65 A B D नवतिम् । 66 A वापि वं । 67 C सर्वमुसं । 68 A च वापते; C प्ररोहन्ति । 69 A B D विंशद्रात्रम् । 70 B चतुःषष्टा°; C D चतुःषष्टि । 71 A C D आरकानि । 72 A B °मरि । 73 C D च दृश्यन्ते । 74 A °विरोधइए, C °विनाशिनः । 75 A B D यानि सुग्यानि । 76 A बलवं । 77 A B दार्° । 78 C °बन्धनम् । 79 C एकान्यूनानि । 80 D मं न सं° । 81 C भयानि वा । 82 B भयेत्र; C भयेयत् । 83 C सवचो । 84 C वानि । 85 A सत्रोचो; 86 C D शककाम्बोजाः ।

एकोनविंशतिर्विन्द्यादाढकानि न संशयः । भरण्यां वासवश्चैव यदा कुर्यात् प्रवर्पणम् ॥ २१
व्यालाः[2] सरीसृपाश्चैव[3] *मरणं व्याधयो[4] रुजः । सस्यं कनिष्ठकं ज्ञेयं प्रजाः सर्वाश्च दुःखिताः ॥ २२
आढकान्येकपञ्चाशत् कृत्तिकासु समादिशेत् । तदात्वपग्रहो ज्ञेयः सप्तविंशतिरात्रकः ॥ २३
द्विमासिकस्तदा[7] मेघश्चित्रं[8] सस्यमुपद्रवम् । निम्नेषु वापयेद् बीजं मर्यमग्रे[9]विनिर्दिशेत् ॥ २४
†आढकान्येकनवतिं ‡रोहिण्यामभिनिर्दिशेत्[10] । अपग्रहं विजानीयात् सर्वमेकादशाहिकाम् ॥ २५
क्षेमं सुभिक्षमारोग्यं नैर्ऋतीयं बहूदकम् । स्थलेषु वापयेद् बीजं राज्ञो[11] विजयमादिशेत् ॥ २६
§आढकान्येकनवतिं सौम्यर्क्षे वर्षते यदा । ¶तदाऽप्यपग्रहं विन्द्याद्वासराणि[13] चतुर्दश[14] ॥ २७
महामात्याश्च[15] पीड्यन्ते $बहुव्याधिं विनिर्दिशेत् । ‖सुभिक्षं चैव विज्ञेयं दंष्ट्रिणः प्रबलास्तथा ॥ २८
आढकानि तु द्वात्रिंशदार्द्रायामभिनिर्दिशेत् । दुर्भिक्षं[17] व्याधिमरणं सस्यघातमुपद्रवम् ॥ २९
श्रावणे प्रथमे मासे **वर्पित्वा न च वर्षति । प्रोष्ठपदं च वर्पित्वा शेषकालं न वर्षति ॥ ३०
आढकान्येक[न]वतिं विन्द्याचैव पुनर्वसोः । सस्यं निष्पद्यते क्षिप्रं व्याधिश्च बलवान् विदुः ॥ ३१
चत्वारिंशच्च द्वे वाऽपि जानीयादाढकान्यथ । पुष्येण मन्दवृष्टिश्च निम्ने बीजानि वापयेत् ॥ ३२
पक्षमश्वयुजे मासे पक्षं प्रोष्ठपदे तथा । अपग्रहं विजानीयाद् बहुलेऽपि प्रवर्पणम् ॥ ३३
††सस्यघातं विजानीयाद् व्याधिभिश्चोदकेन च । साधवो दुःखिता विन्द्यात्प्रोष्ठपदमपग्रहः ॥ ३४
मघासु खारी विज्ञेया सस्यानां च समुद्भवम् । कुक्षिव्याधिश्च बलवाननीतिश्च तु जायते ॥ ३५
फाल्गुनीषु च पूर्वासु यदा देवः[19] प्रवर्षति । खारी तदाऽऽदिशेत् पूर्णां तदा ‡‡स्त्रीणां च तत्सुखम् ॥ ३६
सस्यानि फलयन्ति स्युर्वाणिज्यानि[20] विशन्ति[21] च । अपग्रहश्चतुर्विंशच्छ्रावणे सप्तरात्रिकः ॥ ३७
उत्तरायां तु फाल्गुन्यां षष्टिसप्त च निर्दिशेत् । आढकानि सुभिक्षं च क्षेममारोग्यमेव च ॥ ३८
दानशीलाश्च मनुजा(मानवा) धर्मशीलाश्च साधवः । अप[ग्र]हं विजानीयात् कार्तिके द्वादशाहिकम् ॥ ३९
पञ्चाशीतिं विजानीयाद् हस्ते प्रवर्पणं यदा । तदा निम्नानि वाप्यानि पञ्चवर्णं[23] धं जायते[25] ॥ ४०
सङ्ग्रामाश्चात्र वर्धन्ते शिल्पिकानां सुखोत्तमम् । श्रावणा-ऽश्वयुजो मासौ[26] तथा कार्त्तिकमेव च ॥ ४१
अपग्रहं विजानीयान्मासे मासे दशाहिकम्[27] । चौराश्च बलवन्तश्च उत्पद्यन्ते च पार्थिवाः ॥ ४२
द्वात्रिं(विं)शमाढकानि[28] स्युश्चित्रायां वर्पणं यदा । चित्रं विन्द्यात् तदा सस्यं चित्रं वर्षं विनिर्दिशेत् ॥ ४३
निम्नेषु[29] वापयेद् बीजं स्थलेषु परिवर्जयेत् । मध्यमं[30] तं[31] विजानीयाद्[32] भद्रबाहुवचो यथा ॥ ४४
द्वात्रिंशदाढकानि स्युः स्वातौ प्रवर्पणं यदा । वायुवृष्टिरनावृष्टिर्मासमेकं[33] च वर्षति ॥ ४५

1 A एकोना, C एकान्यूना । 2 A B D तदा व्यालाः । 3 A B D it is not found in these Mss. * A मृत्युव्याधितो विविधैः रुजैः । 4 C व्याधि । 5 C घोरयः । 6 A B D द्वौ । 7 A D मासका ।
8 C देवः । 9 C जय । † C The first quarter is missing in this Ms. ‡ B The three following quarters are not found in this Ms. 10 A B D मपि । 11 C राज्ञश्च । 12 C भयम् । § D This st. is not found in this Ms. ¶ B तदा प्रवर्पणं विद्यात् 13 A सप्त । 14 A सेकादशाहिका ।
15 A महामात्रा; B महामत्रा; C महामंत्रा । $ A B D चतुर्व्याधिश्च जायते । ‖ A B D क्षेमं सुभिक्षमारोग्य । 16 A द्वाविंश । 17 C D सुभिक्षम् । 18 C क्षेम । ** C वर्षचैव पुनः पुनः । †† This stanza is preceded by the following stanza in B C D:—चतु-षष्टिमाढकानि यदा वर्षति वासवः । मघाऽऽश्लेषासु प्रथमं कुरुते च प्रवर्पणम् ॥ 19 A मेघः । ‡‡ A स्त्री चरन्तु सुखम् । 20 A वणयो । 21 A निर्विशन्ति ।
22 C चतुर्विंशत । 23 A पञ्चवर्णे । 24–25 A विजायते । 26 A B D वातः । 27 A दसाधिकाम् । 28 B द्वात्रिंशत्म् । 29 C निम्नेषु । 30–31 C मध्यमानां समा । 32 C विद्यात् । 33 A °वृष्टिमाः; C °मसि ।
34 A भग्नवृष्टिः । 35 A B वर्षम् ।

विशाखासु विजानीयात् खारिरेव न संशयः । सस्यं संपद्यते सर्वं वाणिज्यं पीड्यते न हि ॥ ४६
अपभद्रं तु जानीयाद् दशार्द्रं ग्रीष्मपादिकम् । क्षेमं सुभिक्षमारोग्यं *तां समां नाऽत्र संशयः ॥ ४७
†जानीयादनुराधायां खारिं प्रवर्षणं यदा । क्षेमं सुभिक्षमारोग्यं परचक्रं प्रशाम्यति ॥ ४८
दूरं[1] प्रवासिका यान्ति धर्मशीलाश्च मानवाः । मैत्री च स्थावरा ज्ञेया शाम्यन्ते[2] चेतयस्तदा ॥ ४९
ज्येष्ठायामाढकानि स्युश्चतुःषष्टिं विनिर्दिशेत् । खलेषु वापयेद् बीजं तदा भूदार्द्रविद्रवः ॥ ५०
मूले खारी विजानीयात् सस्यं सर्वं समृद्ध्यति । एकंमूल्यानि पीड्यन्ते ‡चौराश्च प्रबलाश्च ये ॥ ५१
एतद् व्यासेन कथितं समासेन पुनः शृणु । §भद्रबाहुवचः श्रुत्वा मतिमानवधारयेत् ॥ ५२
द्वात्रिंशदाढकानि स्युः नक्रमासेषु(?) निर्दिशेत्[11] । समक्षेत्रे[12] द्विगुणितं तत् त्रिगुणं[13] वाधितेषु[14] च ॥ ५३
उल्कावत् साधनं चात्र ¶वर्षणं च विनिर्दिशेत् । शुभाऽशुभं ततो वाच्यं सम्यग् ज्ञात्वा यथाक्रमम् ॥ ५४

॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते वर्षाध्यायो दशमः ॥

अथातः संप्रवक्ष्यामि गन्धर्वनगरं तथा । शुभा-ऽशुभं[15] तु[16] भूतानां नैर्ग्रन्थे निपुणे[17] यथा[18] ॥ १
पूर्वसूरे यदा घोरं[19] गन्धर्वनगरं भवेत् । नागराणां वधं विन्द्यात् तदा[20] घोरमसंशयम् ॥ २
**अस्तं याते यथाऽऽदित्ये गन्धर्वनगरं भवेत् । यायिनां च तदा विन्द्याद् वधं घोरमुपस्थितम् ॥ ३
रक्तं गन्धर्वनगरं दिशं[22] दीप्तां यदा भृशम् । शस्त्रोत्पातं[23] तदा विन्द्याद् दारुणं समुपस्थितम् ॥ ४
पीतं गन्धर्वनगरं दिशं[24] याम्यां[25] यदा[26] भृशम्[27] । ††व्याधिं तदा विजानीयात् प्राणिनां मृत्युसन्निभम् ॥ ५
कृष्णं गन्धर्वनगरमपरस्यां[28] स्रुतं[29] दिशि । वधं[30] तदा विजानीयाद् भयं वा शूद्रयोनिजम् ॥ ६
श्वेतं गन्धर्वनगरं दिशं सौम्यां यदा भृशम् । राज्ञो विजयमाख्याति नगरस्थं धनान्वितम् ॥ ७
सर्वास्वपि यदा दिक्षु गन्धर्वनगरं भवेत् । सर्वे वर्णा विरुध्यन्ते सर्वदिक्षु परस्परम् ॥ ८
कपिलं सस्यघाताय माञ्जिष्ठं हरिणं(तं)[31] तथा । अव्यक्तवर्णं कुरुते बलक्षोभं समन्ततः ॥ ९
गन्धर्वनगरं स्निग्धं समाकारं सतोरणम् । शान्तदिशि समाश्रित्य राज्ञस्तद् विजयङ्करम् ॥ १०
गन्धर्वनगर(रे) व्योम्नि[36] वकं[37] यदि दृश्यते । वातोऽशनिनिपातांस्तु तत् करोति सुदारुणम्(णान्) ॥ ११
इन्द्रायुधसवर्णं[41] च धूमाग्निसदृशं च यत् । तदाग्निभयमाख्याति गन्धर्वनगरं नृणाम् ॥ १२
खण्डं विशीर्णं[43] छिद्रं[44] वा गन्धर्वनगरं यदा । तदा तस्करसङ्घानाम्[45] स भयो[46] जायते भुवि ॥ १३

* C परचक्रं प्रशाम्यति । † C This st. is missing in this Ms. 1 A B D दूरा । 2 A शाम्यन्ते, C शाम्यते । 3 C च भयं । 4 C खदक° । 5 C स्थानि । ‡ A B D तदा चौरा भयदंते । 6 A B D समास । 7 A B D शृणवो । 8 A B D पुनः । § A मतिमानुपगृह्णीत भद्रबाहुप्रवर्षणम्, B D मतिमानुपधारेत भद्रबाहुप्रवर्षणम् ॥ 9 A B D °त्रिंशता° । 10 C नक्रं मासेषु; D नक्रमेषु । 11 D विनिर्दिशेत् । 12 A B D समक्षेत्रेषु । 13 A B D त्रिगुणं । 14 A B D वाहितेषु । ¶ C निर्दिशेत् मासकोविदः । 15-16 A B D °शुभार्थं° । 17-18 A C संप्रभाषितम् । 19 A घोरं । 20 C वधं । 21 C समुपस्थितम् । ** C This is missing in this Ms. 22 B दिशं । 23 A B °त्पातं । 24 C दिशि । 25 A D दीप्त; B पीत° । 26 C समाश्रितं । 27 A दिशाम्; B भवेत् । †† C the same latter half is found in this Ms as in st. 4. 28 C अपरां । 29 A B शृतं, C संभूतं । 30 ABD वर्णं । 31 C नगरं । 32 C धनधान्वितम् । 33-34 C हरेद्रश्च । 35 C अर्धदाय । 36 C योद् । 37 C दुष्टं । 38 A वाता च । 39 A सन्निपातांस्तु । 40 C चंद्र° । 41 A B D °सुवर्णं । 42 B धूम° । 43 C विशीर्णं°, D विशीर्णम् । 44 B °वर्णं; D सच्छिद्रं । 45 A D it is not found in B C । 46 A °सम्भवम्; C °संभवम् । 47 A C भयतोः ।

यदा गन्धर्वनगरं सप्राकारं सतोरणम् । *दृश्यते तस्करान् हन्ति तदा पर्वत(यान् वन)वासिनः ॥ १४
†विशेष्यदापसव्य तु गन्धर्वनगरं यदा । परचक्रेण महता नगरं परिवार्यते[3] ॥ १५
गन्धर्वनगर क्षिप्रं दक्षिणे जायते यदा । स्वपक्षागमनं चैव जयं वृद्धिं[4] जलं वहेत् ॥ १६
यदा गन्धर्वनगर प्रकट[5] तु दवाग्निवत् । दृश्यते पुरतोधार्यं तद्भवेन्नान सशयः ॥ १७
अपसव्यं विशीर्णं[9] तु गन्धर्वनगर यदा । तदा विलुप्यते राष्ट्रं बलक्षोभश्च जायते ॥ १८
यदा गन्धर्वनगरं प्रविशेयोऽभिदक्षिणम् । अपूर्वां लभते राजा तदा स्फीतां वसुन्धराम् ॥ १९
सध्वजं सपताकं वा सुस्निग्ध सु[प्र]तिष्ठितम् । शान्ता[11] दिशं प्रपद्येत राजवृद्धिं तदाऽऽदिशेत् ॥ २०
यदा धूमैर्घनैर्मिश्रं सविद्युत् सबलाहकम् । गन्धर्वनगर स्निग्धं[14] विन्द्यादुदकसप्लवम् ॥ २१
सध्वज सपताकं वा गन्धर्वनगरं यदा । दीप्तां दिश समाश्रित्य नियतं राजमृत्युदम् ॥ २२
विदिक्षु चैव सर्वासु गन्धर्वनगर यदा । संकरः सर्ववर्णानां तदा भवति दारुणः ॥ २३
द्विवर्णं वा त्रिवर्णं वा गन्धर्वनगरं यदा । चातुर्वर्ण्यमयं भेदं तदानापि विनिर्दिशेत् ॥ २४
अनेकवर्णसस्थानं गन्धर्वनगर भवेत् । क्षुभ्यन्ते[20] तत्र राष्ट्राणि ग्रामाश्च नगराणि च ॥ २५
सङ्ग्रामाश्चानुवर्तन्ते मास शोणितकर्दमाः । एतस्मिल्लक्षणोत्पाते भद्रबाहुवचो यथा ॥ २६
रक्तं गन्धर्वनगरं क्षत्रियाणा भयावहम् । पीत वैश्यान् निहन्त्याशु कृष्णं शूद्रान् सितं द्विजान् ॥ २७
अरण्यानि तु सर्वाणि गन्धर्वनगरं यदा । आरण्यं जायते राष्ट्रं अचिरान्नात्र सशयः ॥ २८
अम्बरेषूदक विद्याद् भयं प्रहरणेषु च । अग्निजेषूपकरणेषु भयमग्नेः समादिशेत् ॥ २९
शुभा-ऽशुभ विजानीयाच्चातुर्वर्ण्यं यथाक्रमम् । ¶दिक्षु सर्वासु नियतं भद्रबाहुवचो यथा ॥ ३०
उल्कावत् साधनं दिक्षु जानीयात् पूर्वकीर्तितम् । सर्वगन्धर्वनगरं यथावदनुपूर्वशः ॥ ३१

॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते गन्धर्वनगरं नाम एकादशोऽध्यायः ॥

अथातः सम्प्रवक्ष्यामि गर्भान् सर्वान् सुखावहान् । भिक्षुकाना[31] विशेषेण परदत्तोपजीविनाम् ॥ १
ज्येष्ठा-मूलममावास्यां मार्गशीर्षं प्रपद्यते[32] । मार्गशीर्षप्रतिपदि गर्भाधानं प्रवर्तते ॥ २
दिवा समुत्थितो[33] गर्भो रात्रौ विसृजते जलम् । ‖रात्रौ समुत्थितश्चापि दिवा विसृजते जलम् ॥ ३
सप्तमे सप्तमे मासे सप्तमे सप्तमेऽहनि । गर्भा.[34] पाकेऽभिगच्छन्ति यादृशं तादृशं फलम् ॥ ४

* In C the following latter half is found — तदापक्षागमन जय वृद्धि बल वदेत् ।
1 A तस्करो । 2 A वे वण° । † C The followinng two sts are not found in C 3 B परिवर्जयेत् । 4 A वृद्धि । 5-6 C दोनुधूम°; D सुमकं । 7 C पुरतो वायु । 8 C तत्रयो । 9 A तु सीर्ष । 10 C विशीर्यंत । 11 A D मिवेश्यतेऽभि°; B निवेशते । 12 A साप्य; B तेवां; D तो । 13 A these two letters are missing 14 C स्थिरम् । 15 C दृश्यते । 16 A दमकहरम्; C रामा विनश्यति । 17 A वरिषु । 18 C बहु । 19 C मर्वासु । ‡ C The second half of this st and the first half of the following st are missing in this Ms So the second half of st 24 becomes the second half of st 23 20 A क्षुभ्यन्ते । 21 A C °च° । § D The following four sts are not found in this Ms 22 A पश्चात् । 23 C निपतेत न । 24 A अम्बरेषु; B अवरेषु । 25 B प्रहरणेषु । 26 A °जेष°; C °तेजो° । ¶ C This second half is not found in this Ms 27 B नमसु । 28 A विज्ञायताम् । 29 C प्रवर्तते । 30 A दिवसो । 31 A सुस्थितो । ‖ C This second half is not found in C so that the first half of every succeeding st becomes the second half of the preceding st in C 32 A गर्भो । 33 A not found here; C पक्ष । 34 C प्रपद्यति ।

पूर्वसन्ध्यासमुत्पन्नः पश्चिमायां प्रयच्छति । पश्चिमायां समुत्पन्नः पूर्वायां च प्रयच्छति ॥ ५
नक्षत्राणि मुहूर्तांश्च सर्वमेवं समादिशेत् । षण्मासान् समतिक्रम्य ततो देवः प्रवर्षति ॥ ६
गर्भाधानादि ये मासास्ते च मासा अवधारिणः । विपाचनत्रयश्चापि त्रयः कालाभिवर्षणाः ॥ ७
शीतवातश्च विद्युच्च गर्जनं परिवेषणम् । सर्वगर्भेषु शस्यंते[1] *निर्ग्रन्थाः साधुदर्शिनः ॥ ८
गर्भास्तु विविधा ज्ञेयाः †शुभा-ऽशुभा यदा तदा । पापलिङ्गा निरुदका भयं दद्युरसंशयः ॥ ९
उल्कापाता दिशां दाहा निर्घाताः पांशुवृष्टयः । गृहयुद्धं निवृत्तिश्च ग्रहणं चन्द्र-सूर्ययोः ॥ १०
ग्रहाणां चरितं चक्रं साधूनां[2] कोपसंभवम् । गर्भाणामुपघाताय न ते ग्राह्या विपश्चितैः ॥ ११
धूमं रजः पिशाचांश्च शस्त्रमुल्कां सनागजैः । तैलं घृतं सुरामस्थि क्षारं[5] लाक्षां वसां[6] मधु ॥ १२
अङ्गारकान् नराम् केशान् मांस-शोणित-कर्दमान् । विपच्यमाना मुञ्चन्ति गर्भाः पापभयावहाः ॥ १३
कार्तिकं[11] वाऽथ पौषं च चैत्र-वैशाखमेव च । श्रावणं चाश्विनं सौम्यं गर्भं विन्याद् बहूदकम् ॥ १४
ये तु पुष्येण दृश्यन्ते हस्तेनाभिजितौ तथा । अश्विन्यां संभवन्तश्च ते पश्चात्रैव शोभनाः ॥ १५
आर्द्राऽऽश्लेषासु ज्येष्ठासु मूले वा संभवन्ति ये । गर्भागमनदक्षाश्च[10] तेऽपि तांश्च वरोदकाः ॥ १६
‡उत्थितं चापि वैशाखं स्रवन्तं कार्तिकं जलम् । हिमागमेन गमिका मन्दोदास्ते प्रकीर्तिताः ॥ १७
स्वातौ च मैत्रदेवे च वैष्णवे च सुवारुणे[13] । गर्भास्तु धारणा ज्ञेया संभवन्तो बहूदकाः ॥ १८
पूर्वामुदीची(चि)मैशानीं ये गर्भा दिशमाश्रिताः । ¶ते सस्यवन्तस्तोयाढ्यास्ते गर्भास्तु सुपूजिताः ॥ १९
वायव्यां(यायां) तु वारुण्यां गर्भा ये संभवन्ति च । मध्यमं वर्षणं वृष्टुः सस्यसंपर्दमेव च ॥ २०
शिष्टं सुभिक्षं विज्ञेयं जघन्या नात्र संशयः । मन्दगाश्च घना वा च सर्वतश्च सुपूजिताः ॥ २१
मारुतः तत्प्रभवाः(क्षाः) गर्भा धूयन्ते[16] मारुतेन[17] च । वाता(तो) वर्षन्तु गर्भांश्च करोत्यपकरोति च ॥ २२
कृष्णानीलाश्च रक्ताश्च पीताः शुक्लाश्च सर्वतः । व्यामिश्राश्चापि ये गर्भाः स्निग्धाः सर्वत्र पूजिताः ॥ २३
अप्सराणां तु सदृशाः पक्षिणां जलचारिणाम् । वृक्ष-पर्वतसंस्थाना गर्भाः सर्वत्र पूजिताः ॥ २४
वापी[18]-कूप-तडागानि नद्यश्चापि मुहुर्मुहुः । पूर्यंते[19] तादृशैर्गर्भैस्तोयक्लिन्नधरावहैः ॥ २५
नक्षत्रेषु तिथौ चापि मुहूर्ते करणे दिशि । यत्र यत्र समुत्पन्नाः स्निग्धाः सर्वत्र पूजिताः ॥ २६
*सुसंस्थानाः सुवर्णाश्च सुवेषाः स्वभ्रजाः घनाः । सुबिन्दवः स्थिता गर्भाः सर्वे सर्वत्र पूजिताः ॥ २७
कृष्णा रूक्षाः सुरुण्डाश्च विद्रवन्तः पुनः पुनः । विस्वरी रूक्षशब्दाश्च गर्भाः सर्वत्र निंदिताः ॥ २८
†अन्धकारसमुत्पन्ना गर्भास्ते तु न पूजिताः । चित्राः स्रवन्ति सर्वाणि गर्भाः सर्वत्र निंदिताः ॥ २९
मन्दवृष्टिमनावृष्टि भयं राजपराजयम् । दुर्भिक्षं मरणं रोगं गर्भाः कुर्वन्ति तादृशम् ॥ ३०

---

1 A D °मासं । 2 A वर्षेषु; D वर्षति । * C भद्रबाहुवचो यथा ॥ † C सपदा चोयदा पदा । 3 B सभूम° । 4 B सना सज ; C सनीरजा; D सपागजा । 5 A क्षौरं । 6 A च सा; D not found. 7 A ग्रहार्क; B अंगरकान्; C अंकारकं । 8 A मुख्येण । 9 A अभिजना: । 10 A °गमनदक्षाः; B °गगणगच्छाः C °गमनपूर्वाः । 11 A वाऽतु, C पश्चाद् । 12 C दूरोदका । ‡ C This is not found in this Ms. 13 A सुदारुणे, C सवारुणे, D सदारुणे । ¶ C From this line onwards five lines are missing in this Ms. 14 B सस्या, D संपद्रं । 15 D सस्यम् । 16 D ध्रियते । 17 B मारुतं; C मारुता । 18 A C D वप्र° । 19 A पूते; B D पूज्यंते । * C this st. is not found in this Ms. 20 A शुभ्रजा । 21 A C D विश्रुता । † Before this stanza, the following st. is found in B C D.—अत्युष्णाश्चातिशीताश्च बहूदका विकृताश्च ये । चित्रा. स्रवन्ति सर्वाणि गर्भा. सर्वत्र निंदिताः ॥

मार्गशीर्षे तु गर्भास्तु ज्येष्ठामूलं समादिशेत् ।○पौषमासस्य गर्भास्तु विन्द्यादाषाढिकाम् बुधा¹ ॥ ३१
माघजातस्त्रवणे विन्द्यात् प्रोष्ठपदे च फाल्गुनात् । चैत्रामश्वयुजे विन्द्याद्गर्भं जलविसर्जनम् ॥ ३२
मन्दोदाः प्रथमे मासे पश्चिमे ये च कीर्तिताः । शेषा बहूदका ज्ञेयाः प्रशस्तैर्लक्षणैर्यदा ॥ ३३
यानि रूपाणि दृश्यन्ते गर्भाणां यत्र यत्र च । तानि सर्वाणि ज्ञेयानि भिक्षूणा भैक्षवर्तिनाम् ॥ ३४
सन्ध्याया यानि रूपाणि मेघेष्वभ्रेषु यानि च । तानि गर्भेषु सर्वाणि यथावस्थं⁴ निरीक्षयेत् ॥ ३५
ये केचिद् विपरीतानि पठ्यन्ते⁵ तानि सर्वशः । लिङ्गानि तोय-गर्भेषु भयदेषु भवेत् तदा ॥ ३६
गर्भा यत्र न दृश्यन्ते तत्र विन्द्यान्महद्भयम् । उत्पन्ना वा श्रवन्त्याशु भद्रबाहुवचो यथा ॥ ३७
निर्ग्रन्था यत्र गर्भांस्तु न पश्येयुः कदाचन । तं देशं प्रथमं त्यक्त्वा सगर्भं त्वरितं व्रजेत् ॥ ३८

## ॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते गर्भलक्षणं नाम द्वादशोऽध्यायः ॥

अथातः संप्रवक्ष्यामि यात्रामत्र सुखावहाम् । निर्ग्रन्थदर्शिता⁸ सध्या⁹ पार्थिवानां जिगीषिणाम् ॥ १
आस्तिकाय विनीताय श्रद्दधानाय धीमते । कृतज्ञाय सुभक्ताय *यात्रा सिध्यति श्रीमते ॥ २
अहङ्कृत तदा(था)¹⁰क्रूरं नास्तिक पिशुन शिशुम् । कृतघ्न चपल¹¹ †भीरु¹² श्री¹³(?) जंहात्सुधं शठम् ॥ ३
वृद्धान् साधून् समागम्य दैवज्ञांश्च विपश्चितान् । ततो यात्राविधिं कुर्यान्नृपस्तं पूज्यबुद्धिमान् ॥ ४
राज्ञा बहुश्रुतेनापि प्रष्टव्या ज्ञाननिश्चिताः । अहङ्कार परित्यज्य तेभ्यो गृहीत निश्चयम् ॥ ५
ग्रह-नक्षत्र-करण तिथयो मुहूर्ताः स्वराः । लक्षण व्यञ्जनो-त्पाता निमित्त साधुमङ्गलम् ॥ ६
‡पूर्वं च पूजिता ह्येते निमित्ता भूभृतैरपि । तस्माद्धि पूजनीयाश्च निमित्ताः सतत नृपैः ॥ ७
[हस्त्यश्वरथपादातं बल खलु चतुर्विधम् । निमित्ते तु यथा ज्ञेयं तत्र तत्र शुभाऽशुभम् ॥ ८
गति-स्वर-मदोपेता हीयन्ते हस्तिनो यथा । §अहोरात्रान्यमाक्रोशु (?) तत् प्रधानवधस्तथा ॥ ९
यावच्छायाकृतिरथैर्हीयन्ते वाजिनो यदा । विमनस्का विगतयः प्रधानस्य वधस्तथा ॥ १०
मेरु-शङ्खस्वनाभार्श्च हेम-रत्नविभूषिताः । छाया¹⁷प्रहीणाः¹⁸ कुर्वन्ति तत् प्रधानवधस्तथा ॥ ११
॥शौर्य शस्त्र-बलोपेता विख्याताश्च पदातयः । परस्परेण भिद्यते तत् प्रधानवधस्तदा ॥ १२
**निमित्ते लक्षयेदेता चतुरङ्गा तु वाहिनीम् । नैमित्तः स्थपतिर्वैद्यः¹⁹ पुरोधाश्च तत्तो²¹ विदुः ॥ १३

○ From the second half of this st the portion covering some 15 sts is not found in C and D both Contextually it is not fitting and hence it is not embodied in the text here but is placed after the seventh stanza in the thirteenth chapter as it is found there in C and D and is contextually fitting also there 1 C दधात् । 2 C °निर्जितम् । 3 C प्रथमे । 4 A B C यथावत् । 5 A पच्यन्ते । 6 C न चेद् D भय सेतु । 7 A missing in this Ms 8 A C D °देशिनाम् । 9 A सत्या । * C यात्रा सिध्य निधीयते । 10 A B D तथा । 11 A च फ्ट । † C चायेत नृप सठ । 12 A भारु । 13 A ही । 14 A निनिश्चितान् । 15 C सबलक्षणम् । ‡ A This is not found in this Ms ¶ A B D यदि दुर्गमक भवेद् । § A आहारमात्रेषु, C आहारोऽनारमाणाथे ; D अहोरोमात्रेषु । 16 A °नामाता C °नास्ताहा । 17 B आया° । 18 A °मार्गीण । ‖ A this st is not found in this Ms ** A B Before this st one line which is probably latter half of a stanza is found but it is dropped in the constituted text as it is not found in C and D It is this –एवमेव जय दुर्धुविपरीता न संशयः ॥ 19 A स्थपितो । 20 A तपुरेश्च । 21-22 A B D शुभाशुभम् ।

चतुर्विधोऽयं विष्कम्भस्तस्य विम्बाः[2] प्रकीर्तिताः ।
स्निग्धो जीमूतसंकाशः सुस्वनः[3] सास(शास्त्र)विच्छुभः[4] ॥ १४

नैमित्तः साधुसंपन्नो राज्ञः कार्यहिताय सः । संधा(धा)वा पार्थिवो[7] युक्तः समानस्थाप्यकोविदः ॥ १५
स्कन्धावारनिवेशेषु कुशलः स्थपतिः स्मृतः । काय-शल्य-शलाकासु विपो[9]-न्मादै-ज्वरेषु[10] च ॥ १६
चिकित्सानिपुणः[11] कार्यः राज्ञा वैद्यस्तु यान्त्रिकः। ज्ञानवानल्पवाग्मी[13] च क्षीवो[14] मुक्तो[15] स(श)मप्रियः ॥ १७
मानो-न्मानै-प्रभायुक्तो पुरोधा गुणवान्छिवः[16] । *स्निग्धो गम्भीरघोषश्च मासावर्ण(?)समायुधः ॥ १८
छायी-लक्षणपुष्टश्च सुवर्णः पुष्ट(?) सुबाहुः । सबलः[22] पुरुषो विद्वान् क्रोधनश्चपलः शिशुः ॥ १९
हिंस्रो[23] विवर्णः[24] पिङ्गो वा †निरोमा निवरोपगत(?) । रक्तश्मश्रुः[25] पिङ्गनेत्रो गौरस्ताम्रः पुरोहितः ॥ २०
निस्रोद्विग्नो नृपहीनो युक्तः प्राज्ञैः सदाहितः । एवमेतान् यथोद्दिष्टान्[27] सत्कर्मेषु च योजयेत् ॥ २१
‡इतरेतरयोगेन न सिद्ध्यन्ति कदाचन । अशान्तः शान्तकरणः शांतः पुष्पभिचारिणाम् (?)॥] २२
§यद्देवाऽ-सुरयुद्धे च निमित्तं दैवतैरपि । कृतप्रमाणं च यस्मात् यद्वृत्तं[28] दैवतैरपि ॥ २३
ज्ञान-विज्ञानयुक्तोऽपि लक्षणैर्यैर्विवर्जितः । तं(न)साधुकार्यगो ज्ञेयो यथा चैको[29] रथस्तथा ॥ २४
यस्तु लक्षणसंपन्नो ज्ञानेन च समायुतः । स साधुकार्यगो ज्ञेयो यथा सर्वाङ्गिको[30] रथः ॥ २५
अल्पेनापि तु ज्ञानेन कर्मज्ञो लक्षणान्वितः । तद् विन्द्यात् सर्वमतिमान् राजकर्मसु सिध्यति ॥ २६
अपि[31] लक्षणवान्मुख्यः कंचिदर्थं प्रसाधयेत् । ज्ञानेन बलहीनस्तु वेदवानपि साधयेत् ॥ २७
¶यथाऽन्धः पथिको भ्रष्टः पथि क्लिश्यत्यनायकः । अनैमित्तस्तथा राजा नष्टे श्रेयसि क्लिश्यति ॥ २८
यथा तमसि चक्षुष्मान् रूपं साधु पश्यति । अनैमित्तस्तथा राजा न श्रेयः साधु पश्यति ॥ २९
§यथा यज्ञो रथो गन्ता चित्रं(?) ताव(?)यथास्वनम् । अनैमित्तस्तथा राजा न सेनाफलमीहते ॥ ३०
चतुरङ्गान्वितो[34] युद्धं[35] कुलालो वर्तिनं यथा । अपनष्टं[36] न गृह्णाति वर्जितं सूत्रतन्तुना ॥ ३१
चतुरङ्गबलोपेतैस्तैस्तथा[38-39] राजा न शक्नुयात् । अवि(व)नष्टफलं मोक्तुं निमित्तेन विवर्जितम् ॥ ३२
तस्माद्राजा निमित्तज्ञं अष्टाङ्गकुशलो[40](लं) वरम् । बिभृयात् प्रथमं प्रीत्याऽभ्यर्चयेत् सर्वसिद्धये ॥ ३३
आरोग्यं जीवितं लाभं सुखं मित्राणि[42] संपदः[43] । ||धर्मोऽ-र्थ-काम-मोक्षाय तदा यात्रा नृपस्य हि[44-45] ॥ ३४
**ध्वजी-ऽऽसनं यानयुग्मं[47] हस्त्य-श्वं स्त्री-नरं स्थितम् । पक्वान्त-स्वप्न-घोषांश्च यथास्थानं स योक्ष्यति ॥ ३५

1 A B विष्कम्भः । 2 A तस्याम्बा; B तस्याश्चाव । 3 A B D सुस्वन° । 4-5 A B D सत्त्वविस्तर्कान् । 6 A D संधात; B ससंघात । 7 A पार्थिविमो । 8 A B D विशेष° । 9 A °दरपाद°; C °दरपाव° । 10 A °करेषु । 11 A B D चिकित्सानि । 12 A B D पुनः । 13 A °भान्मारप°; B °क्यानाक्ष° । 14 A क्षीवाः । 15 B स्थिरासन° । 16 A मनोन्मायेन । 17 A B D वपुष्मान् । 18 A D शान्तैयेच्छुचिः; B शान्तये शुचिः । * This st. and the following three sts. are not found in this Ms. 19-20 A °वक्ष्यमान् शुभः । 21 B वयो° । 22 A साधन° । 23 B हंसो; D हिंसो । 24 B त्रिवर्ण°; D नूवर्ण° । † B निरोमाविषरोपरात्; D निरोमाविद्रुरोपरात् । 25 A °साधु । 26 A साधु । 27 A समा° । ‡ C In place of this line the following is found in C:—पूजयेच्च सदा नित्यं ततो यात्रा समृद्ध्यति । § C Five sts. including this also are not found in this Ms. 28 B वृत्तांत; D निवृत्तं । 29 B D चक्रे । 30 A °रगः; D चय । 31 A सर्वाङ्गकारयः । 32 A भव° । ¶ A B D In place of this line the following line is found in these Mss.:—यथं चौदसिको भ्रष्टः पथि क्लिश्यत्यनायकम् । 33 C सर्वोत्तिक । $ C Three following sts. including this are not found in this Ms. 34-35 A चतुरङ्गान् वियुद्° । 36 B अनष्टं । 37 B सत्र । 38-39 A C चतुरङ्गबलोऽपित । 40 C सुरथं सकुशलं । 41 C शुचिम् । 42 A मित्राणि । 43 C संततिः । || A B D धर्मार्थ-काम वानीयात् । 44-45 A B D न पश्यति । ** C Four sts. including this are not found in this Ms. 46 A मृगा° । 47 A B °युग्मं ।

भृत्या-ऽमात्यास्त्रयः पूज्या राज्ञा स्थाप्याः सुलक्षणाः । एषा कुलक्षणे राजा लक्षणोऽप्यवसीदति ॥ ३६
तस्माद् देशे च काले च सर्वज्ञानवता वरम् । सुमनाः पूजयेद् राजा नैमित्त दिव्यचक्षुषम् ॥ ३७
न वेदा नापि चाङ्गानि न विद्याश्च पृथक् पृथक् । प्रसाधयन्ति तानर्थांन्निमित्त यत् सुभाषितम् ॥ ३८
अतीतं वर्तमान च भविष्यद्यच्च किञ्चन । सर्वं विज्ञायते येन तज्ज्ञान नेतरं मतम् ॥ ३९
*स्वर्गं प्रीतिफल प्राहु॰ सौख्य धर्मविदो जनाः । तस्मात् प्रीतिः सता ज्ञेया सर्वस्य जगतः सदा ॥ ४०
स्वर्गेण तादृशा प्रीतिर्विषयैर्वापि मानुषैः । यदि स्पष्ट निमित्तेन सता प्रीतिस्तु जायते ॥ ४१
तस्मात् स्वर्गास्पद पुण्यं निमित्त जिनभाषितम् । पावनं प्रवर श्रीमत् कामदं वा प्रसादतः[1] ॥ ४२
रागद्वेषौ च मो(ह)श्च च वर्जयित्वा निमित्तवित् । देवेन्द्रमपि निर्भीतो यथाशास्त्रं समादिशेत् ॥ ४३
सर्वाण्यपि निमित्तानि निमित्तान्यपि सर्वशः । निमित्त पृच्छतो यानि निमित्तानि भवन्ति तु ॥ ४४
यथान्तरिक्षात् पतित[3] यथा भूमौ च[4] तिष्ठति । तथाङ्गजनिता चेष्ट(ष्टा)[6] निमित्तं फलमात्मकम्[7] ॥ ४५
तथैवाम्भो यथा निम्ने सेतुबन्धे च तिष्ठति । चित्ते निम्ने तथा तद् वै विन्द्याद् बधफलात्मकम्[8] ॥ ४६
बहिरङ्गादिविषयमन्तरङ्गार्थं चिन्तितम् । तज्ज्ञ॰ शुभाऽशुभ ब्रूयान्निमित्तज्ञानकोविदः ॥ ४७
सुनिमित्ते[10] नं सयुक्तस्तत्परै॰ साधुवृत्तयै (?) । अदीनमन-सकल्पो मन्यादि[13] लक्षयेद् विधिम्[14] ॥ ४८
कुञ्जरस्तु[15] यदा नर्देद्धूयमाने[17] हुताशने । स्निग्धसुख च निर्भ्रान्त्व राजा विजयमावहेत् ॥ ४९
एव हय-वृषाश्चाऽपि सिंह-व्याघ्राश्च सुस्वरा॰ । नर्दयन्ति तु सैन्यानि तदा राजा प्रमर्दति ॥ ५०
स्निग्धोऽल्पघोषो धूम्रोऽथ गौरवर्णो महानृजुः । प्रदक्षिणोऽप्यवच्छिन्नः सेनानी विजयावहः ॥ ५१
कृष्णो वा विकृतो रूक्षो वामावर्तो हुताशनः । हीनार्चिर्धूमबहुल स प्रस्थाने भयावह॰ ॥ ५२
सेनाग्रे हूयमानस्य यदि पीता शिखा भवेत् । श्यामाऽथवा यदा रक्ता पराजयति सा[20] चमू॰ ॥ ५३
यदि होतुः पथे शीघ्र जुह्वतः शङ्कमपतः । पार्श्वतः पृष्ठतो वाऽपि तदेवं फलमादिशेत् ॥ ५४
यदि धूमाभिभूता स्याद् पातो भस्म निपातयेत् । आहुतीः कम्पते वाऽऽज्य[23] न सा यात्रा विधीयते ॥ ५५
राजा परिजनो वापि कुप्यते मन्त्रशासने[24] । होतुराज्यविलोपे च तस्यैव[25] वधमादिशेत् ॥ ५६
यथाक्रमभाजने केशा भस्मास्थीनि पुन. पुनः । सेनाग्रे हूयमानस्य[27] मरण तत्र निर्दिशेत् ॥ ५७
आपो होतुः पतेद्धस्तात् पूर्णपात्राणि वा भुवि । कालेन स्याद् वधस्तत्र सेनाया नात्र सशयः ॥ ५८
यदा होता तु सेनायाः प्रस्थाने स्खलते मुहुः । बाधयेद्[28] ब्राह्मणान् भूमौ तदा स्ववधमादिशेत् ॥ ५९
धूमः कुणिमगन्धो वा पीतको वा यदा भवेत् । सेनाग्रे हूयमानस्य तदा सेनापराजयः ॥ ६०
मूषको नकुलस्थाने वराहो गच्छतेतरा (?) । वामावर्तः पतङ्गो वा राज्ञो व्यसनमादिशेत् ॥ ६१

* C This and the following stanza are not found in this Ms 1 B D सर्वं° ।
2 A प्रमादत । 3–4 C पतितमत्र । 5 C न । † This line and the following line are not
found in this Ms 6 A चष्ट । 7 A °मात्मिकाम् । 8 A बध, C वध° । 9 C समन्ताच । 10 A
सनिमित्ताद्, C सुनिमन्त्रेण, D सनिमित्तेन । 11 A B D तत्परं । 12 A साधु चेतसा; B साधु चेतया; D
साधु चेतया । 13 C इन्याद्रीन् । 14 B द्विधा, D द्विधम् । 15 C सुभारस्ति । 16 C हस्ती । 17 A न
देदीप्यमाने; D नर्देन्त्वयमाने । 18 B जायते; C सस्वना । 19 D तदा । 20–21 A सात्र चमू: । ‡ Before
this stanza, the following additional stanza is found in A – यदि होतु पथे शीघ्र जुह्वत
स्तानि मध्यतः । पार्श्वत पृष्ठतो वाऽपि राजा विजयमादिशेत् ॥ 22 A आहूयते । 23 A राज्य, B वाज्य; C
जाति । 24 C °शासने । 25–26 C तस्य व्यसनम् । 27 A धूयमानस्य । ¶ C This and the
following stanza are not found in this Ms 28 A बोधयेत्, D बाधयत् ।

मक्षिका वा पतङ्गो वा यद्वाऽप्यन्यः सरीसृपः । सेनाग्रे निपतेत् किञ्चिद्धूयमाने वधं वदेत् ॥ ६२
शुष्कं प्रदहते[3] यदा वृष्टिश्चाप्यपवर्षति[4] । ज्वाला भूमाभिमुखा तु ततः सैन्यो(सेना) निवर्तते ॥ ६३
युद्धं[7] प्रदक्षिणं देवा यदि गच्छंति वा दिशम् । राज्ञो विजयमाचष्टे वामतस्तु पराजयम् ॥ ६४
जुह्वत्यनुपसंपन्नस्थानं तु यत् पुरोहितः । जित्वा शत्रून्[9] रणे[10] सर्वान् राजा तुष्टो निवर्तते ॥ ६५
*यस्य वा सम्प्रयातस्य प्रमुखे पृष्ठतोऽपि वा । पतत्युल्का सनिर्घाता वधं तस्य निवेदयेत् ॥ ६६
सेनां यान्ति प्रयातां यां क्रव्यादाश्च जुगुप्सिताः । अभीक्ष्णं विस्वरा घोरा सा सेना वध्यते परैः ॥ ६७
प्रयाणे निपतेदुल्का प्रतिलोमा यदा चमूम् । निवर्तयति मासेन[11] तत्र यात्रा न सिध्यते[12] ॥ ६८
†छिन्ना भिन्ना प्रदृश्येत यत्र संप्रस्थिता चमूः । निवर्तयेत स क्षीप्रं न सा सिद्ध्यति कुत्रचित् ॥ ६९
यस्याः प्रयाणे सेनायाः सनिर्घाता मही चलेत्[13] । न तया संप्रयातव्यं साऽपि वध्येत सर्वशः ॥ ७०
अग्रतस्तु सपाषाणं तोयं वर्षति वासवः । सङ्ग्रामं घोरमत्यन्तं[14] जयं राष्ट्रस्य[15] शंसति[16] ॥ ७१
प्रतिलोमो[17] यदा वायुः सपाषाणो रजस्करः । निवर्तयति प्रस्थाने परस्परजयावहः ॥ ७२
मारुतो दक्षिणो वापि(ति) यदा हन्ति परां चमूम् । प्रस्थितो प्रमुखं तस्य विन्द्यात् तत्र पराजयम् ॥७३
यदा सूर्यात्[18] परं[19] सेनां[20] समागत्य महाजनः । तस्य विजयमाख्याति भद्रबाहुवचो यथा ॥ ७४
हीनाङ्गा जटिला यद्वा व्याधितैः[21] पापपांशवैः[22] । षण्ढाः पापस्वरा ये च प्रयाणे ते तु निन्दिताः ॥ ७५
नग्नं प्रव्रजितं दृष्ट्वा मङ्गलं मङ्गलार्थिना । कुर्यादमङ्गलं यस्तु तस्य सोऽपि न मङ्गलम् ॥ ७६
पीडितोऽपचयं कुर्याद्वाक्रुष्टो वध-बन्धनम् । ताडितो मरणं दद्याद् त्रासितो रुदितं[23] तथा ॥ ७७
पूजितः सोत्तराङ्गेन[24] लाभं राज्ञः समादिशेत् । तस्मात्तु मङ्गलं कुर्यात्[26] प्रशस्तं[27] साधुदर्शनम्[28] ॥ ७८
देवतं[29] तु यदा वाहं[30] राजा सत्कृत्य[31] स्वं पुरम् । प्रवेशयति तद्राजा वाहस्तु लभते पुरम् ॥ ७९
‡वैजयन्त्यो विवर्णाश्च राज्ञो वाह्यो यदा मदः । पराजयं समाख्याति तस्मात् तां परिवर्जयेत् ॥ ८०
सर्वार्थेषु प्रमत्तश्च यो भवेत् पृथिवीपतिः । हितं न शृणुतश्चापि तस्य विन्द्यात् पराजयम् ॥ ८१
§अभिद्रवन्ति यां सेनां विस्वरं मृगपक्षिणः । श्व-मानुष-शृगाला वा सा सेना वध्यते परैः[33] ॥ ८२
भग्नं दग्धं च शकटं यस्य राज्ञः प्रयायिनः । देवोपसृष्टं जानीयान्न तत्र गमनं शिवम् ॥ ८३
उल्का वा विद्युतोऽभ्रं वा कनकाः सूर्यरश्मयः । स्तनितं यदि वा छिद्रं सा सेना वध्यते परैः ॥ ८४
प्रयातायास्तु सेनाया यदि कश्चिन्निवर्तते । चतुःपदो द्विपदो वा न सा यात्रा विशिष्यति ॥ ८५
प्रयातो यदि वा राजा निपतेद् वाहनात् क्वचित् । अन्यो वाऽपि गजाऽश्वो वा साऽपि यात्रा जुगुप्सिता ॥८६
क्रव्यादाः पक्षिणो[34] यत्र निलीयन्ते ध्वजादिषु । निवेदयन्ति ते राज्ञस्तस्य घोरं चमूवधम् ॥ ८७

---

1 A नृपतेः । 2 A युद्धं; C जुहुयात् । 3 A प्रदहे, C प्राप्यते । 4 C वृष्टिम् । 5 C वायुः । 6 C उपसर्पति । 7 D जुहुत । 8 A °सम्पन्न; C °सन्नं; D °सर्पणं । 9–10 C शत्रुगणान् । * A B D यस्यां चमू प्रयातायां । 11 A या सेना, B मासेना; D सा सेना । 12 A D सिध्यते । † C not found in this Ms. 13 C °तले । 14 C भाख्याति । 15 A B राजत्र; C राष्ट्रस्य । 16 C संप्रति । 17 A B D अप्रतिलोमः । 18 C तु या; D तु याति । 19 C परा, D अपरं । 20 A B D सेना । 21 A B D व्याधिता । 22 C येपि वासव॰; D पापसंभवः । 23 C रुधिरं । 24 B D सो तरंगेण; C ततः सम्यक् । 25 A °स्त, B D °स्त° । 26–27 A B कुर्यान्न साधु, D साधु साधु॰ । 28 A B D °मंगलम् । 29 A देवतं; B देवतं । 30 A वाहा; B वाहा, D वाहा । 31 B स्वीकृत्य । ‡ C not found in this Ms. § C दिशि दिशि समाश्रित्य । 32 C स्वरैः । 33 A न सिध्यते । 34 A दक्षिण॰ ।

मुहुर्मुहुर्यदा राजा निवर्तन्तो निमित्ततः । प्रयातः परचक्रेण सोऽपि वध्येत संयुगे ॥ ८८
*यदा राज्ञः प्रयातस्य रथश्च पथि भज्यते । युगाद्यं चोपकरणं तस्य राज्ञो वधं दिशेत् ॥ ८९
प्रयाणे पुरुषा वाऽपि यदि नश्यन्ति सर्वशः । सेनाया बहुशश्चाऽपि हता दैवेन सर्वशः ॥ ९०
यदा राज्ञः प्रयातस्य दानकं[1] कुरुते[2] जनः । हिरण्यव्यवहारेषु साऽपि यात्रा न सिध्यते[3] ॥ ९१
प्रवरं घातयेद् भृत्यं प्रयाणे यदि पार्थिवः । अभिषिञ्चेत् सुतं वापि चमूस्तस्यापि वध्यते ॥ ९२
विपरीतं यदा कुर्यात् सर्वकार्यं मुहुर्मुहुः । तदा तेन परित्रस्ता सा सेना परिवर्तते ॥ ९३
†परिवर्तेद् यदा वातः सेनामध्ये यदा यदा । तदा तेन परित्रस्ता सा सेना परिवर्तते ॥ ९४
विशाखा-रोहिणीभ्यां तु नक्षत्रैरुत्तरैश्च यत् । पूर्वाह्णे च प्रयातस्य हतसैन्यो निवर्तते ॥ ९५
पुष्येण मैत्रयोगेन[4] यो[5]ऽश्विन्यां[6] च नराधिपः । अपराह्णे विनिर्याति वाञ्छितं स समाप्नुयात् ॥ ९६
चित्रा हस्ते तु रेवत्यां वैष्णवे[7] च न शोभनम् । प्रयाणं सर्वभूतानां विशेषेण महीपतेः ॥ ९७
हीने मुहूर्ते नक्षत्रे तिथौ च करणे तथा । पार्थिवो योऽभिनिर्याति अचिरात्[8] सोऽपि वध्यते ॥ ९८
‡यथामयुक्ति(?)वा राजा मात्रामधिकमूपते । तदा ससैन्यो वध्येत यदि नैव निवर्तते[9] ॥ ९९
विहारानुत्सवांश्चापि कारयेत् पथि पार्थिवः । स सिद्धार्थो निवर्तेत[10] भद्रबाहुवचो यथा ॥ १००
वसुधा वारि वा यस्य यानेषु[11] प्रतिहीयते[12] । वैष्णादयो निपतन्ते ससैन्यो वध्यते नृपः ॥ १०१
सर्वेषां शकुनानां च प्रशस्तानां स्वरः शुभः । तूर्णं विजयमाख्याति प्रशस्तानां च दर्शनम् ॥ १०२
फलं वा यदि वा पुष्पं ददते यस्य पादपः । अकालजं प्रयातस्य न सा यात्रा विधीयते ॥ १०३
येषां निवसनं[15] किञ्चित् विपरीतं मुहुर्मुहुः । स्थालिकां पिठरो[16] वाऽपि यस्य तद् वधमीहते ॥ १०४
आचाराद्यं[18] भवेत्कृष्णं तद् विनाशाय कल्पते । निवर्तयन्ति ये केचित् प्रयाता बहुशो नराः ॥ १०५
यात्रामुपस्थितोपकरणं तेषां च स्याद् ध्रुवम्[19] वधः । पक्वान्नं विरसं दग्धं दग्धभूमिषु मीहते(?) ॥ १०६
तस्य व्याधिभयं चाऽपि मरणं वा पराजयम् । रथप्रहरणं[21] चैवं ध्वज-ध्यानं[23] यो नृपः ॥ १०७
चित्रं[24] कुर्यात् कश्चिन्नीलं स च मन्त्री च वध्यते । म्रियते[25] पुरोहितो वाऽस्य छत्रं वा पथि भज्यते ॥ १०८
$............................... । अनग्निर्ज्वलनं[26] वा स्यात् सोऽपि राजा विनश्यति ॥ १०९
द्विपदश्चतुःपदो वाऽपि स(श)कृन्मुञ्चति[27] विस्वरैः । बहुशो व्याधितार्त्ता वा सा सेना विद्रवं व्रजेत् ॥ ११०
•सेनायास्तु प्रयातायाः कलहो यदि जायते । द्विधा त्रिधा वा सा सेना **विनश्यति न संशयः ॥ १११
‖जायते चक्षुषो व्याधिः स्कन्धावारे प्रयायिनाम् । अचिरेणैव कालेन साऽग्निना दह्यते चमूः ॥ ११२
व्याधयश्च प्रयातानामतिशीतं विपर्ययैः[30] । अत्युष्णं चातिरूक्षं च राज्ञो यात्रा न सिध्यति ॥ ११३
††निविष्टो यदि सेनाग्निः क्षिप्रमेव प्रशाम्यति । ‡‡उपवह्य सदृशस्य (?) भज्यते साऽपि वध्यते ॥ ११४

* C This and next stanza are not found in this Ms. 1 A दानकाकुरुते । 2 B दानवं; C नाणकं । 3 A D क्षिप्यते, C दृश्यते । † D This st. is not found in this Ms 4 A B D °भानु । 5 A B D मित्र° । 6 A C °देवेन 7-8 A तेन चेत्, B D देवेन च । 9 C व्यसनः । 10 B विरस°; C विद्रासौ; D विरसे । ‡ C not found in this Ms. 11 A न निवर्तेत, C न वर्तेत । 12 C धूमो । 13 C याने । 14 C उदीर्यते । § C तदा ससैन्यो वध्येत यदा वा वा न निवर्तते । 15 B विवसनं, C न विपर्यं । 16 B D स्फाटिका । 17 A B D अपि वा । ¶ C This st. and next also are not found in this Ms. 18 B आचाराज्यं । 19 B वधो वा; D वधः । 20 B not found. 21-22 C °प्रहरणानां च । 23 C ध्वजायानं । 24 C चिह्नं । 25 A म्रियते । $ This first half is not found in any of the Mss. 26 A अग्ने° । 27 B D सहन्; C हृतं । 28 C स्वनि । 29 C व्याम् । ** C not found in this Ms. ‖ A विद्रवन्ति सदाऽत्मिनम् । 30 B D प्रवर्तेते । †† C not found in this Ms. ‡‡ A उपधदामदृशस्य; B उपदृशमदृशस्य ।

देवतावेष्टने[1] वर्षे[2] क्षीराणां कस्कने[3] तथा । विन्द्यान्महद्भयम् घोरं शान्तिं तत्र तु कारयेत् ॥ ११५
देवतान् दीक्षितान् वृद्धान् पूजयेत् ब्रह्मचारिणः । ततस्तेषां तपोभिश्च पापं राज्ञां प्रशाम्यति ॥ ११६
उत्पातकाश्च जायन्ते हस्त्यश्व-रथ-पत्तिषु[4] । भाजनेषु अनेकेषु राजबन्धश्चमूवधः ॥ ११७
उत्पाता विकृताश्चापि दृश्यन्ते ये प्रयायिनाम् । सेनायां चतुरङ्गायां तेषामौत्पातिकं फलम् ॥ ११८
*भेरी-शङ्ख-मृदङ्गाश्च प्रयाणे ये यथोचिताः । निवध्यन्ते[5](?)प्रयातानां विस्वरा वाहनाश्च ये[6] ॥ ११९
पद्मतरसु[7] प्रयायेत फाकसैन्यं प्रयायिनाम् । विस्वरं निभृतं वाऽपि येषां विद्याचमूवधम्[8] ॥ १२०
राज्ञो[9] यदि[10] प्रयातस्य गायन्ते[11] ग्रामिकीः[12] पुरे[13] ।
चण्डानिलो[14] नदी[15](दि) क्षुभ्येत्[16] †सोऽपि वध्येत पार्थिवः ॥ १२१
‡देवतां[18]-ऽतिथि-भृत्येभ्यो[19]ऽदत्वा[20] तु भुञ्जते यदा । §यदा भक्ष्याणि[21] भोज्यानि[22] तदा राजा[23] विनश्यति ॥ १२२
द्विपदाश्चतुःपदा वाऽपि यदाऽभीक्ष्णं रसन्ति[24] ये[25] । परस्परं सुसम्बद्धा[26] सा सेना वध्यते परैः ॥ १२३
ज्वलन्ति यस्य शस्त्राणि नमन्ते निष्क्रमन्ति[27] च । सेनायाः शस्त्रकोशेभ्यः साऽपि सेना विनश्यति ॥ १२४
नर्दन्ते[28] द्विपदा यत्र पक्षिणो वा चतुःपदाः । क्रव्यादास्तु विशेषेण तत्र संग्राममादिशेत् ॥ १२५
विलोमेषु च[29] वातेषु[30] दिनेषु[31] वाहनेषु च । शकुनेषु च दीप्तेषु युध्यतां[32] तु पराजयः ॥ १२६
युद्धप्रियेषु[33] हृष्टेषु[34] नर्दत्सु[35] वृषभेषु च । रक्तेषु चाभ्रजालेषु[36] सन्ध्यायां युद्धमादिशेत् ॥ १२७
अभ्रेषु च विवर्णेषु युद्धोपकरणेषु च । दृश्यमानेषु सन्ध्यायां सद्यः[37] संग्राममादिशेत् ॥ १२८
कपिले रक्त-पीते वा हरिते च तले[38] चमूः[39] । स सद्यः परसैन्येन वध्यते नाऽत्र संशयः ॥ १२९
काका गृध्राः शृगालाश्च कङ्का ये[40-41] चामिषप्रियाः । पश्यन्ति[42] यदि सेनायां ¶प्रयातायां भयं भवेत् ॥ १३०
उलूका[43] वा चिराला वा मूषका वा यदा[44] भृशम्[45] ।
वासन्ते[46] यदि[47] सेनायां नियतं सोऽस्तिको[48] (सौप्तिको ?) वधः ॥ १३१
मार्न्या[49] वा यदि वाऽऽरण्यां[50] दिवा[51] व(वा)सन्ति[52] निर्भयम् ।
सेनायां संप्रयातायां सोऽस्तिको[53](सौप्तिको ?)ऽत्र भयं भवेत् ॥ १३२
मैथुनेन[54] विपर्यासं यदा कुर्युर्विजातयः[55] । रात्रौ दिवा[56] च सेनायां[57] सौप्तिको[58](कं) वधमादिशेत् ॥ १३३

1 A चेष्टनो; B चेष्टनो । 2 A वाऽस्य; B वाऽपि; D वाप्य । 3 A B D कस्पना । 4 A C D °पत्तिषु । * C this st. is numbered twice in this Ms. 5 C मानाद्रंते । 6 C वा भयावहाः । 7 C तमोऽमतः । 8 [illegible] °वधाम् । 9 C यदि । 10 C राज्ञो । 11 B मायते; C गांयते; D गायते । 12 A ग्रामिका; B ग्रामिकां; C ग्रामिके । 13 A C पुरो । 14 A चन्द्रा°; C चन्द्रो । 15 C नीलो । 16 C नद्यो । 17 C क्षुभ्यो । † C यस्य व्याधिरुपैकरं । ‡ This st. is missing in A. 18 B देवता । 19 B भृत्येभ्यः । 20 B D दत्वा । § C The following latter half is found in this Ms. भक्ष्येभ्यानि सेनाया तदा सोऽपि विनश्यति । 21 B भक्षाणि; D भक्ष्याणि । 22 D भोज्याणि । 23 D राजा । 24 C रसेति । 25 A चेत्; B ते । 26 C सुसंनद्धा । 27 C न नमन्ति । 28 C नर्दयन् । 29-30 D चवातेषु । 31 A [illegible] C दीनेषु । 32 A वध्यतां । 33 C युद्धप्रियेषु । 34 C दृष्टेषु । 35 C नद्रत्सु° । 36 C °जलेषु । 37 C तस्य । 38 B तले; C तपेन् । 39 C चमूम् । 40-41 A B D कंकेया । 42 All Mss. have got पश्यन्ति. It may be पतन्ति or दृश्यन्ते । ¶ C सा सेना वध्यते ध्रुवम् । 43 A भल्लुका । 44-45 A [illegible] D भृशन्ति वा । 46 C पश्यन्ति । 47 A सेऽपि; B D तेपि । 48 B सोऽस्तिरो; C सोऽस्तिरो; D सोस्तिको । 49 A D ग्राम्या; B ग्राम्या । 50 D अरण्यां । 51 C यदि । 52 B C पश्यंति; D वसंति । 53 The same variants as under 48. 54 C मिथुने तु । 55 All the Mss. have either got कुर्यात or कुर्वन्ति but grammatically कुर्युः is better. 56 A B D दिवाऽपि । 57 A [illegible] D वा वाने । 58 The same variants as under 48. But here C has got सौप्तिक which is quite correct.

शुक्लपक्षे द्वितीयायां सोमशृङ्गं यदा(ऽ)शुभम्[1] । स्फुटिताग्रं द्विधा चाऽपि विन्द्याद् राहु(हो)स्तदाऽऽगमम्[2-3] ॥ १५

चन्द्रस्य चोत्तरा कोटी द्विशृङ्गं दृश्यते यदा । धूम्रो विवर्णो ज्वलितस्तदा राहोर्ध्रुवागमः ॥ १६

उदयास्तमने भूयो यदा पश्चोदयोर्रवौ[5-6] । इन्द्रो वा यदि[7] दृश्येत[8] तदा ज्ञेयो ग्रहागमः ॥ १७

कबन्ध-परिघा-मेघा धूम-रक्तपटे-ध्वजाः[10] । उद्गच्छमाने दृश्यन्ते सूर्ये राहोस्तदाऽऽगमः ॥ १८

कबन्धो[11] महिषाकारः शकटस्थो[13] यदा शशी । उद्गच्छन् दृश्यतेऽष्टम्यां तदा ज्ञेयो ग्रहागमः ॥ १९

सिंह-मेघो-धूम्रसंकाशः परिवेषो यदा शशी । अष्टम्यां शुक्लपक्षस्य[14] तदा ज्ञेयो महागमः ॥ २०

श्वेतके सरसंकाशे रक्त-पीतोऽष्टमो[15] यदा[16] । यदा चन्द्रः प्रदृश्येत तदा ब्रूयाद् महागमः ॥ २१

उत्तरतो दिशः श्वेतैः[17] पूर्वतो रक्तकेसरैः । दक्षिणतो[18]ऽथ[19] पीताभैः[20] प्रतीच्यां कृष्णकेसरः ॥ २२

यदा[21] गच्छन् गृहीतोऽपि क्षिप्रं चन्द्रः प्रमुच्यते । परिविष्टो[22] दिनं[23] चन्द्रे विमर्देत[24] विमुञ्चति[25] ॥ २३

द्वितीयायां यदा चन्द्रः श्वेतवर्णः प्रकाशते । उद्गच्छमानः सोमो[26] वा[27] तदा गृह्येत राहुणा ॥ २४

तृतीयायां[28] यदा सोमो विवर्णो दृश्यते यदि[29] । पूर्वरात्रे तदा राहुः पौर्णमास्यामुपक्रमेत्[30] ॥ २५

अष्टम्यां तु यदा चन्द्रो दृश्यते रुधिरप्रभः । पौर्णमास्यां तदा राहुरर्धरात्रमुपक्रमेत् ॥ २६

नवम्यां तु यदा चन्द्रः परिवेश्यै[31] तु[32] सुप्रभैः[33] । अर्धरात्रमुपक्रम्य तदा राहुरुपक्रमेत् ॥ २७

कृष्णप्रभो[34] यदा सोमो दशम्यां परिविष्यते । पश्चाद् रात्रं तदा राहुः सोमं गृह्णात्यसंशयः ॥ २८

*अष्टम्यां तु यदा सोमं श्वेताभ्रं[35] परिवेषयते । सर्वां[36] परिघं[37] चै राहुर्विमुञ्चति न संशयः ॥ २९

कनकाभो यदाऽष्टम्यां परिवेषेण[38] चन्द्रमाः । अर्धग्रासं[40] तदा कृत्वा[41] राहुरुद्गिरते पुनः ॥ ३०

परिवेषो[42]यो[43]ऽष्टम्यां[44] चन्द्रगा रुधिरप्रभः । सर्वग्रासं तदा कृत्वा राहुश्चन्द्रं[46] विमुञ्चति[47] ॥ ३१

रक्तपीता यदा कोटिर्दक्षिणः स्याद्ग्रहः सितः । पीता यदाऽष्टम्यां कोटी तदा श्वेतं ग्रहं वदेत् ॥ ३२

दक्षिणा मेचकाभा तु कपोतग्रहमादिशेत् । ‡कपोतमेचकाभा तु कोटी ग्रहमुपानयेत् ॥ ३३

रक्तोत्तरा[48] सितकोटिर्दक्षिणा[49] स्याद्[50] यदाष्टमी । कपोतग्रहमाप्स्याति[51] पूर्वपश्चात् सितप्रभम् ॥ ३४

पीतोत्तरा यदा कोटिर्दक्षिणो रुधिरप्रभः । कपोतग्रहणं विन्द्याद् ग्रहं पश्चात् सितप्रभम् ॥ ३५

यतोऽभ्रस्तनितं विन्द्यात् मारुतं करकाशनी । रुतं वा श्रूयते किञ्चित् तदा विन्द्याद् महागमम् ॥ ३६

मन्दक्षीरा यदा वृक्षाः सर्वदिक् कलुषा भवेत् । क्रीडते च यतो बालस्ततो विन्द्याद् महागमम् ॥ ३७

ऊर्ध्वं प्रस्पंदते चन्द्रश्चित्रः संपरिवेष्यते । कुरुते मण्डलं[55] स्पष्टस्तदा विन्द्याद् महागमम् ॥ ३८

---

1 B C D प्रभम् । 2–3 A राहुवचो यथा । 4 B दृश्यतो; C दृश्यतम् । 5 A B D पश्चादयो । 6 C रवे । 7 A B D यदा । 8 C वा दृश्येत् । 9 A B कमं च, D कमं च । 10 B रज°; C रक्त°; D रक्तू । 11 C यथा । 12 A B D भार्गवान् । 13 A B D शकटं वा । 14 C शुक्लपक्षस्य । 15 A B अष्टमी । 15–16 C सितोष्टमी । 17 A B D सर्वैः । 18–20 C दक्षिणो सप्तमीतामः । 21 C उदयं । 22–23 C परिविष्टामृतं । 23 A दिनः । 24 B विमर्देन; D विमर्दोन । 24–25 A परिवेश्यासुरप्रभः । 26–27 A श्वेतो वै । 28 C द्वितीयायाम् । 29 A प्रभः; C पुनः । 30 C पूर्वमास्याम् । 31–33 A परिवेश्यासुरप्रभः । 34 C °प्रदः । * A this st. is not found in this ms. 35 C श्वेतता । 36–37 C यदा वा परिलीयं । 38 A चन्द्रमाः । 39 A रुधिरप्रभः । 40 A B D °रात्रं । 41 A B D गत्वा । 42–44 C यदाष्टम्यां परिविष्टः । 45–47 C पुनरुद्गिरते गृहाः; 45–46 B जं चं; D जं च । † C This st. is preceded by the following st. in this Ms.—परिविष्यते यदाऽष्टम्यां चन्द्रमाः कृष्णसन्निभः । सर्वग्रासं तदा सोमो राजं क्षीणं विमुञ्चति ॥ This and the following st. are numbered as 35–36 in this Ms. ‡ C कपोतमेचकाहंसककोमग्रहमुपानयेत् । 48 B D रक्तोऽन्तरा । 49–50 A B D दक्षिणस्य । 51 C ग्रहणं । 52 C विन्द्यात् । 53 C ग्रह° । ¶ C This st. is not found in this Ms. 54 B °क्षाराः । 55–56 A मण्डलस्फोटे ।

यतो विषयघातश्चायनयः पशु-पक्षिणः । तिष्ठन्ति मण्डलायन्ते ततो विन्द्याद् महागमम् ॥ ३९
पाण्डुर्वा द्रावलीढो वा चन्द्रमा यदि दृश्यते । व्यथितो हीनरश्मिश्च यदा तत्त्वे[1] निवेशनम्[2] ॥ ४०
मतः प्रबध्यते वेपस्ततो विन्द्याद् महागमम् । यतो वा मुच्यते वेपस्ततश्चन्द्रो विमुच्यते ॥ ४१
गृहीतो विध्यते चन्द्रो वेपमावेव(?) विध्यते । यदा तदा विजानीयात् षण्मासाद्ग्रहणं[8] पुनः ॥ ४२
प्रत्युतमुत्तमादित्य यदा गृह्येत चन्द्रमा । भय तदा विजानीयात् ब्राह्मणानामुपस्थितम्[5] ॥ ४३
प्रातरादौ यदा सोमो गृह्यते राहुणाऽऽवृतः । भय तदा विजानीयादमात्यानां विशेषतः ॥ ४४
मध्याह्ने तु यदा चन्द्रो गृह्यते कनकप्रभः । क्षत्रियाणां नृपाणां च तदा भयमुपस्थितम् ॥ ४५
व्यावृत्ते यदि मध्याह्ने राहुणा गृह्यते शशी । भय तदा विजानीयात् वैश्यानां समुपस्थितम् ॥ ४६
नीचैर्बलनी[11] सोमस्तु यदा गृह्येत राहुणा । सूर्पाकार[12] तदाऽऽनर्त्तं मरुकच्छं च पीडयेत् ॥ ४७
अल्पचन्द्र[13] च द्वीपाश्च म्लेच्छाः पूर्वापरौ द्विजाः । दीक्षिता क्षत्रियामात्याः शूद्राः पीडामवाप्नुयुः ॥ ४८
यतो राहुर्ग्रसेच्चन्द्र ततो यात्रा[18] निवेशयेत्[19] । वृत्ते निवर्तते[20] यात्रा[21] यतो[22] तस्मान्महद् भयम् ॥ ४९
गृह्णीयादेकमासेन चन्द्र-सूर्यौ यदा तदा । रुधिर[25]वर्ण[26]संसक्ता सङ्ग्रामे जायते मही ॥ ५०
चौराश्च यायिनो म्लेच्छा घ्नन्ति साधूननायकान्[28] । विरुध्यन्ते[29] गणाश्चापि नृपाश्च विषमे चराः ॥ ५१
पूर्वे[33] हनु[34] यदा हत्वा राहुर्निष्क्रमते शशी । रूक्षो वा हीनरश्मिर्वा पूर्वो[37] राजा विनश्यति ॥ ५२
दक्षिणाभेदने गर्भ दाक्षिणात्याश्च पीडयेत् । अपराभेदने चैव नाविकाश्च जिघांसति ॥ ५३
निश्चलः सुप्रभः कान्तो यदा निर्याति चन्द्रमाः । राज्ञां विजय-लाभाय तदा ज्ञेयः शिवङ्करः ॥ ५४
एतान्येव तु लिङ्गानि सूर्ये[38] ज्ञेयानि धीमता । कृष्णपक्षे यदा चन्द्रः शुभो वा यदि वाऽशुभः ॥ ५५
उत्पाताश्च निमित्तानि शकुन-लक्षणानि च । पर्वकाले यदा सन्ति तदा राहोर्भुवागमः ॥ ५६
रक्तो राहुः शशी सूर्यो हन्युः क्षत्रान् सितो द्विजान् । पीतो वैश्यान् तमः[41] शूद्रान् द्विवर्णस्तु जिघांसति ॥ ५७
चन्द्रमाः पीडितो हन्ति नक्षत्रं यस्य यद्गतं । रूक्षः पापनिमित्तश्च विकृतश्च विनिर्गत[46] ॥ ५८
प्रसन्नः साधुकान्तश्च दृश्यते[48] सुप्रभः शशी । यदा तदा नृपान् हन्ति प्रजाः पीतः सुवर्चसः ॥ ५९
राज्ञो राहुः प्रवासे यानि लिङ्गान्यस्य पर्वणि । यदा गच्छेत् प्रशस्तो वा राजा राष्ट्रविनाशनः ॥ ६०

---

1 C तो । 2 C निषेवणम् । * C This second half is missing in this. Moreover this st is followed by the following st — ऊर्ध्वं प्रसंवृते चन्द्रो रूक्षो माली च वीक्षते । यदा तदा विजानीयात् षण्मासाद् ग्रहणं पुनः ॥ † C This st is not found in this ms 3–5 A ब्राह्मणानामु पस्थितम् । 6–7 A B प्रत्युतम तमादित्य, C प्रत्ययस्तमनादित्ये । 8–9 A षण्मासाद्ग्रहणं पुन, C इत्युनां शामुपस्थितम् । ‡ C this and the next st are missing in this Ms 10 C दिशा° । 11 C °वलम्बे । § C सूर्या यद्राजनका मर्त्ता तरुक च प्रपीड्यते । 12 B सूर्याकारे । 13 C अल्पामद्रे च । 14–15 C पर्वतरानिता । 16 C चन्द्रा । 17 C अवर्ण्यायान् । 18 C रात्रौ । 19 C निवेद्येत् । 20 C निवृत्ते । 21 C यात्राया । 22–23 C तस्मामाशु । 24 C महः । 25–27 C तदा रुधिरसंसक्ता । 28 A D मनायकम्, C सनायकम् । 29 A निरुध्यन्ति । 30 C रणे । 31 A विसमसुचरा, B D विषमसुचरा । ¶ B D This st is preceded by the following st in these Mss — मतारसाद (D मतोरसाद) तु हित्वा तु राहु निष्कमते शशी । तदा क्षेम सुभिक्षं च मद्ररोगांश्च निर्दिशेत् ॥ । 32–34 A यतोरिस, 32–35 C यदोत्सर्पं तु भित्वा । 33 D पूर्वं, 35 D हित्वा । 36 C हतो । 37 C श्रेष्ठो । 38 A B D स्वकान् । 39 C राहोः । 40 B C सर्व । 41 A B D कृष्ण । 42 C D विवर्णः । 43 A B D विजानितु । 44 A पपत, C प्रद्रवेत् । 45 A विकृतिः, C पीतः । 46 C विनिवर्तते । 47 C °कान्तो । 48 A B C दृश्यते । 49 C सुभद्रः । 50 C प्राज्ञः । 51 B C सुवर्षेत, D सवसर्पः ।

यतो राहुप्रमथने[1] ततो यात्रा न सिध्यति । प्रशस्ताः[2] शकुना यत्र सुनिमित्ता सुयोजिताः[3] ॥ ६१

राहुश्च चन्द्रश्च तथैव सूर्यो यदा सवर्णा न परस्परघ्नाः[4] ।
काले च राहुर्भजते रवीन्दू तदा सुभिक्षं विजयश्च राज्ञः ॥ ६२

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते विंशोऽध्यायः ॥

कोणजान्[5] पापसंभूतान् केतून्[6] वक्ष्यामि ज्योतिषि ।
मृदवो[7] दारुणाश्चैव तेसामासं[8] (समासेन) निबोधत[9-10] ॥ १

[*]एकादिषु शतान्तेषु वर्षेषु[11] च विशेषतः । केतवः संभवन्त्येवं विषमाः पूर्वपापजाः[12] ॥ २

[†]पूर्वलिङ्गानि केतूनामुत्पाताः[13] सदृशाः[14] पुनः[15] । गृहात्ममनान्ताश्च[16] दृश्यन्ते[17] चापि[18] लक्षयेत्[19] ॥ ३

[‡]एतानि चैव केतूनां प्रवक्ष्यामि पृथक् पृथक् । उत्पाता यादृशा उक्ता महात्ममनान्यपि ॥ ४

अन्यस्मिन्[20] केतुभवने[21] यदा केतुश्च दृश्यते । तदा जनपदव्यूहः प्रोक्तान् देशान् स हिंसति ॥ ५

एवं दक्षिणतो विन्ध्यादपरेणोत्तरेण च । कृत्तिकादियमान्तेषु[22] नक्षत्रेषु यथाक्रमम् ॥ ६

धूम्रः क्षुद्रश्च यो ज्ञेयः केतुरङ्गारको[23]ऽग्निपः[24-25] । [§]प्राणसंत्रासयन्प्राणी स प्राणीसंशयस्तथा ॥ ७

त्रिशिरस्के द्विजभयं वरुणे[26] युद्धमुच्यते । अरश्मिके[27] नृपापायो विरुध्यन्ते परस्परम् ॥ ८

विक्षिले[28] विक्षिलं सर्वं क्षिली[29] सर्वपराजयम् । शृङ्गे शृङ्गीवधं पापः कबन्धे जनमृत्युदः[30] ॥ ९

रोगं (गो) सस्यविनाशश्च दुःकालो मृत्युविद्रवः । [¶]मांस-लोहितकं ज्ञेयं फलमेवं च पंचधा ॥ १०

मानुषः[31] पशु-पक्षीणां समयस्तापसक्षयी । विषाणी[32] दंष्ट्रिघाताय सस्यघाताय[33-34] शङ्करः[35] ॥ ११

अङ्गारकोऽग्निसंकाशो धूमकेतुस्तु धूमवान् । नालीसंस्थानसंस्थानो वैडूर्यसदृशप्रभः ॥ १२

कनकाभा शिखा यस्य स केतुः कनकः स्मृतः । यस्योर्ध्वगा शिखा शुक्ला स केतुः शुक्ल उच्यते ॥ १३

[\$]त्रिवर्णश्चन्द्रवद् वृत्तः समसस्यं च दङ्कुरः(?) । त्रिभिः शिरोभिः शि(त्रि)शिरो गुल्मकेतुश्च गुल्मवत् ॥ १४

विकान्तस्य शिखे दीप्ते ऊर्ध्वगे च प्रकीर्तिते । [‖]ऊर्ध्वमुण्डा शिखा यस्य स खिली[36] केतुरुच्यते ॥ १५

शिखे विषाणवद् यस्य स विषाणी प्रकीर्त्तितः । व्युच्छिद्यमानो भीतेन रूक्षाः च क्षिलिका शिखा ॥ १६

शिखाश्चवतो ग्रीवार्धं कबन्धस्य विधीयते । [**]एकरश्मिः प्रदीप्तस्तु स केतुर्दीप्त उच्यते ॥ १७

शिखा मण्डलवद् यस्य स केतुर्मण्डली स्मृतः । मयूरपक्षी विज्ञेयो[37] हसनैः[38-39] प्रभयाऽल्पया[40] ॥ १८

---

1 C प्रतपते; D °प्रमथने । 2 C प्रशान्ताः । 3 A B D सुयोषिताः । 4 A यस्य रश्मा । 5 C कठिजान् । 6 C केचित् । 7 A B D मृतयः । 8 C अरुणाः । 9–10 A B D समासार्द सदन्यथा । * C This is missing. 11 A वर्णेषु । 12 A D सर्वपापदाः; D पूर्वपापदाः । † C In this Ms. the following st. is found in its place.—धूमाद्याः श्वेतपर्यन्ताः वर्णाश्विविषमालि च । केतवः षे समुत्पन्नाः पीडयन्ति दिशं शुभाम् ॥ । 13–15 B प्रवक्ष्यामि पृथक पृथक् । 14–15 C ग्रहणा य च । 16 B उत्पाता यादृशा उक्ता; C उदयात्ममने चापि । 17–19 B महात्मावनवान्यपि; ग्रहाणां लिङ्गये क्षयेत् । ‡ B C not found. 20–21 C प्राङ्गारके भवे यस्मिन् । 21 C °समति । 22 C ससनक्षत्रे । 23–25 C अंगारश्चाग्निजं भयम् । § C कनकप्रमाणसंत्रासी अलीसः अरश्मिके प्राणसंक्षयम् ॥ 26 C वारुण्ये । 27 A B D रश्मिकेतु । 28 B विलिखे; C विलिपः । 29 A B खिली । 30 C तु महद्भयम् । ¶ C संग्रामाश्च प्रवर्तन्ते मांसशोणितकर्दमाः । 31 C मनुष्य° । 32 C विपणं । 33 A यशः; B D यस्य° । 34 B संकर°; C संदच । 35 B D भद्रां । \$ C त्रिवर्णा कृशोपयोक्तः महाकेतुः महाद्युतिः । द्विशिरः द्विशिरः स्वाद् गुल्मश्चैव तु गुल्मवान् ॥ ‖ C This and the next three lines are not found in this Ms. so that the second half of the 17th stanza forms the second half of the 15th st. 36 B खली । 37 B सुरमा । ** A B D एकस्मिंश्च प्रदीप्तो वा सेसमरोहितजा शुभाः ॥ 38 D संस्थाने । 39 C हसनम । 40 C प्रभावया ।

*श्वेतः सुभिक्षदो ज्ञेयः सौम्यः शुक्तः शुभार्थिषु । कृष्णादिषु च वर्णेषु चातुर्वर्ण्यं विभावयेत् ॥ १९
केतोः समुत्थितः केतुरन्यो यदि च दृश्यते । क्षु-च्छस्त्र-रोग-विघ्नस्था[1] प्रजा गच्छति संक्षयम्[2] ॥ २०
एते च केतवः सर्वे धूमकेतुसमं फलम् । विचार्यं वीथिभिश्चापि प्रभाभिश्च विशेषतः ॥ २१
यां दिशं केतवोऽर्चिर्भिर्धूमयन्ति दहन्ति च । तां दिशं पीडयन्त्येते क्षुधाद्यैः पीडनैर्भृशम् ॥ २२
नक्षत्रं यदि वा केतुर्गृहं[3] वाऽप्यथ धूमयेत् । ततः शस्त्रोपजीवांश्च स्थावरांश्च स हिंसति ॥ २३
स्थावरे धूमिते तज्ज्ञा यायिनो[4] व्यापिनस्तथा[5] । [प्राप्नुवन्]त्यनयान् घोरान् भयैरुग्रैः प्रपीडिताः ॥ २४
शुक्रं दीप्त्या यदि हन्याद्धूमकेतुरुपागतः । तदा सस्य-नृपान् नागान् दैत्यान् शूरांश्च पीडयेत् ॥ २५
शुकानां शकुनानां च वृक्षाणां चिरजीविनाम्[7] । शकुनि-ग्रहपीडायां[8] फलमेतत्[9] समादिशेत् ॥ २६
शिशुमारं[11] यदा केतुरुपागत्य प्रधूमयेत्[12] । तदा जलचरं[13] तोयं प्रव्यवक्षांश्च(?)हिंसति ॥ २७
सप्तर्षीणामन्यतमो यदा केतुः प्रधूमयेत् । तदा सर्वभयं विन्द्यात् ब्राह्मणानां न संशयः ॥ २८
बृहस्पतिं यदा हन्यात् धूमकेतुरथार्चिभिः । †वेदविद्याविदो[16] वृद्धान् नृपांस्तज्ज्ञांश्च हिंसति ॥ २९
एवं शेषान् महान् केतुर्यदा हन्यान्[17] स्वैरश्मिभिः[19] । महद्युद्धे तदा प्रोक्तं फलं तत्तु समादिशेत् ॥ ३०
नक्षत्रे[20] पूर्वदिग्भागे[21] यदा केतुः प्रदृश्यते । तदा देशान् दिशीमुमां[22] भञ्जन्ते पापदा नृपाः ॥ ३१
‡अङ्गानङ्गान् कलिङ्गांश्च मगधान् काशनन्दनान्[26] । पट्टचार्यांश्च कोशवीं धेणुसारं सदाहयम् ॥ ३२
कोसलिङ्गान् सुलान् नेद्रान् माकन्दामलदांस्तथा । कुनटान् सिथलान् महिपान् माहेन्द्रं पूर्वदक्षिणः ॥ ३३
वेणान् विदर्भमालान् अश्मकांश्च छर्वणान् । द्रविडान् वैदिकान् द्वादेकलान् दक्षिणापथे ॥ ३४
कोङ्कणान् दंडकान् भोजान् गोमान् सूर्पारिकं वनम् । किष्किंधान् वनवासांश्च लङ्कां हन्यात् स नैरृते ॥ ३५
अङ्गान् सुराष्ट्रान् सशुद्रान् भरुकच्छादसेरकान् । शूद्रान् हृपिजलरुहान् केतुर्हन्याद्विपथगः ॥ ३६
काम्बोजान् रामगांधारान् आभीरान् यवरच्छकान् । चैत्रसौत्रैयकान् सिन्धुमहामन्ययुयायुजः ॥ ३७
वाह्लीकान् चीनविषयान् पर्वतांश्चाप्यदुस्तरान् । सौधेयं कुरुवैदेहान् केतुर्हन्यात्तदुत्तरः ॥ ३८
चर्म्मांसुवर्णु कलिं च किरातान् बर्बरान् द्विजान् । चैदिस्तमिपुलिन्दांश्च हन्ति सास्यां समुच्छ्रितः ॥ ३९
सदृशाः केतवो हन्युस्तासु मध्ये वधं वदेत् । व्याधिं शस्त्रं क्षुधां मृत्युं परचक्रं च निर्दिशेत् ॥ ४०
[काले नियता केतु(?)] नक्षत्रं दिशस्तथा । आकस्मिको भवत्येव कदाचिदुदितो ग्रहः ॥ ४१
षड् त्रिंशत् तस्य वर्षाणि प्रवासः परमः स्मृतः । मध्यमः सप्तविंशं तु जघन्यस्तु त्रयोदश ॥ ४२
एते प्रायेण दृश्यन्ते येऽन्ये[29] तीव्रभयावहे[30] । प्रवासं शुक्रवत्तस्य विन्द्याद्(दो)त्पातिकं महत् ॥ ४३
धूमध्वजो धूमशिखो धूमार्चिर्धूमतारकः । चित्रकेतुश्चित्रशिखश्चैव मयूरो चित्रमस्तकः ॥ ४४
महाकेतुश्च श्वेतश्च केतुमान् केतुवाहनः । उल्काशिखश्च ज्वालश्च प्रज्वाली वांबरीयरः ॥ ४५

* A B D श्वेते सुभिक्षं क्ष्मरे यस्य चार्थेद दिया । 1 A B D °विघ्नास्था । 2 A भञ्जा । 3 ABD संक्षयम् । 4 C हेम° । 5 C यायिनो । 6 C धूमिते । 7 C फलसंयुतम् । 8-9 C शुक्रचैतेन । 10 C केतुः । 11 A सशिरमारः, B शिशिमारः, D शशिमारः । 12 A B प्रधावयेत् । 13 A B D जलचराः । 14 A यदा धूम्यः, B यदा धूमः, D अदाधूयश । † C देवांश्च ब्राह्मणान् विद्वान् । 15 B not found. 16 B D विद्वान् । 17-19 A चारिता गुरुश्मिभिः, 17 B यस्, D यदा । 20 A B D नक्षत्रे । 21 A B D पूर्वदिशं । 22-23 B दशाशुभां, C भवेशुभां । 24 C चापदा । 25 C दिशान् । ‡ Most of the names of the countries occurring in the sts. from 32 to 39 are unintelligible; but I have not tried to emend them as their meaning is clear. 26 A B °वंदनान्, C काशिकांश्च । 27 A B D पुरुा । 28 C भयाय । 29 C येने । 30 C भयाहिता । 31 A विवासः, B D विशति । 32 C केता । 33 C केतु । 34 C not found. 35 not found.

हेन्द्रस्वरो हेन्द्रकेतुः शुक्लवासोऽन्यदन्तकः[1] । विद्युत्समो[2] विद्युद्वतो विद्युद्विद्युत्स्फुलिङ्गकः[3] ॥ ४६
चिक्षणो[4] हरुणो गुल्मः कवन्धो[5] ज्वलिताङ्कुरः । तालीशः कनकश्चैव विकान्तो मांसरोहितः ॥ ४७
*वैवस्वतो धूममाली महार्चिश्च विघूमितः । दारुणाः केतवो ह्येते भयमिच्छन्ति दारुणम् ॥ ४८
जलदो जलकेतुश्च[6] जलरेणुममप्रभः । रूक्षो वा जलवान् शीघ्रं विप्राणां भयमादिशेत् ॥ ४९
शिखी[7] शिखण्डी[8] विमलो विनार्दी[9] धूमशासनः[10] । विशिरा[11]नः शतार्चिश्च[12] शाल्केतुरलक्तकः ॥ ५०
घूणो[13] घृतार्चिश्चयवनश्चित्रपुष्पविदूषणः । विलम्बी विषमो[15] मिश्र वा(पा) वकी[16] हसनः शिखी[17] ॥ ५१
कुटिलः[18] कद्रुवरिलनः(?)[19] कुचित्रगोऽय निश्चयी[20] । [ज्ञेया नि]नामानि[नि]कचैश्च येषां नोक्तं तु[21] लक्षणम्[22] ॥ ५२
येऽन्यदिक्षे जले भूमौ गोपुरेऽट्टालके गृहे । वला-भरण-शस्त्रेषु ते[23] स्वपावाँ[24] न केतवः[25] ॥ ५३
दीक्षितान् पितृदेवांश्च विप्रान् भूवान् वनीपकान् । पूजयेच्छान्तिपुष्ट्यर्थं पापकेतुसमुत्थिते ॥ ५४
पौरा जानपदा राजा विप्राश्च[26] वणिजो नराः । दान-पूजां मुखं[27] कुर्युः[28] केतोः प्रीतिकरोऽन्यतः(?) ॥ ५५
यथा हि बलवान् राजा सामन्तैः सारपूजितः । नात्यर्थं बाध्यते तत्तु तथा केतुः सुपूजितः ॥ ५६
सर्पो[30] दष्टो[31] यदा मन्त्रैरगदैश्च चिकित्स्यते । केतुदृष्टस्तथा लोके दान-जपैश्चिकित्स्यते ॥ ५७

यः केतुचारं निखिलं यथावत् पठेत् सुयुक्तं श्रमणः सुमेधाः[32] ।
स केतुदग्धांस्त्यजते हि देशान् प्राप्नोति पूजां च नरेन्द्रमूलात् ॥ ५८

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते एकविंशोऽध्यायः ॥

सर्वग्रहेश्वरः सूर्यः प्रवासमुदयं प्रति । तस्य चारं प्रवक्ष्यामि तन्निबोधत तत्त्वतः[33] ॥ १
शुक्लो रजतवर्णाभः[34] स्फटिकाभो[35] महाद्युतिः । उदये दृश्यते सूर्यः सुभिक्षं नृपतेर्हितः ॥ २
रक्तः शस्त्रप्रकोपाय भयाय च महार्घदः[36] । नृपाणामहितश्चापि स्थावराणां च कीर्तितः ॥ ३
पीतो लोहितरश्मिश्च व्याधि-मृत्युकरो रविः । विरश्मिर्धूम्र[37]कृष्णाभः क्षुधार्त(र्ति)दृष्टि[38] रोगदः ॥ ४
कबन्धेनाऽऽवृतः सूर्यो यदि दृश्येत प्राग् दिशि । वङ्गानङ्गान् कलिङ्गांश्च काशी-कर्णाट-मेखलान् ॥ ५
मागधान् कटकालांश्च[39] कालवक्रोष्ट्रकर्णिकान् । महेन्द्रसंश्चिवी[40]तुद्रां[41]स्तदा हन्याच भास्करः ॥ ६
कबन्धो[42] वामपीतो वा दक्षिणेन यदा रविः । चर्मिलान्(?) मलयानुद्रां[43] स्त्रीराज्यं वनवासिकान् ॥ ७
किष्किन्धांश्च कुनाटांश्च ताम्रकर्णांस्तथैव च । स चक्र-चक्र-कूरांश्च कुणपांश्च स हिंसति ॥ ८

---

1 C सद्दत्तकः । 2 A B D °क्षाम्मः । 3 A विस्वत्वः; B चिकिरिकत्वी; D किरिचचक्षः । 4 A चक्षेदः । 5 A B D शालोली । *C Before this st the following st. is additionally found in this Ms. कवन्धो यूपकेतुश्च रश्मिमाली च कीर्तितः । धूमार्चिरकुशो धूमो विपाणी मूर्द्धिरस्तथा ॥ 6 A रेणुश्च । 7 A B D खिटी । 8 A खिटीडी । 9 A विनामी; C विनाशी । 10 A D सांवनः; B सांवरः । 11 C द्विविशालः । 12 A सनार्चिश्च । 13 A धूपः; B D कृप° । 14 B पवतः; C पणवः । 15 C विपदः । 16 A B D पताकी । 17 A सखी, C शिखः । 18 A B D कुडुकः । 19 A B D दद्रग-कुकलिलः । 20-21 केतुश्च । 22-25 A वत्रैया या न केतव°; C सर्वत्रदुप-पातके । 26 A वणिपाः । † C कुर्याश्च-पूर्वजान् सवार्न् च केतोः प्रशमा इव । 27-29 A कुर्युः शस्त्राणि पूजार्थे । 30-31 A सर्प-दष्टो । 32 A समेकः । 33 D चक्रतः । 34 B रजतः प्रावयः; D रजतः प्ररपः । 35 A D स्फुटिकाभः । 36 A D महार्घदः; B महाभयः । 37 A धूम्रधूम्र° । 38 A °दृष्टि°; B °दृष्ट°; C दृष्टि° । 39 B कटकामात्; C केवलान् गादान् । 40 B C D °चक्र° । 41 A B D संवृणान् । 42 A D गाद्रान्; B चाद्रान् । 43 A कमंध; C कच्चं या । D कमांधः । 44 A वाम°; सपीतः । 45 B रुचिरान्; C रर्चिता; D चर्चिता । 46 A B D मद्रान्; 47 C कर्णाटान् । 48 A °कुणडान् । ‡ C स चक्रां चक्रां किटान् कन्यांश्च सहि तां सति ।

अपरेण च कबंधस्तु दृश्यते द्युतितो यदा । युगन्धरावर्ण[1](?)मरुत्सराष्ट्रान्[2] कच्छ-गौरिजान्[3] ॥ ९
कोङ्कणानपरान्तांश्च भोजांश्च कालजीविनः । अपरांस्तांश्च सर्वान् वै निहन्यात् तादृशो रविः ॥ १०
उत्तरे उदयोऽ[4]र्कस्य कबन्धसदृशस्तदा[5] । क्षुद्रकान् मालवान् हन्ति सिन्धु-सौवीर-दर्दुरान्[6] ॥ ११

काश्मीरान् दरदांश्चैव पलवां(पह्लवान्)[10] मागधांस्तथा ।
साकेतान् कोशलान् काञ्चीमहिच्छत्रं[11] च हिंसति ॥ १२

कबन्धमुदये भानोर्यदा मध्ये प्रदृश्यते । मध्यमा मध्यसाराश्च पीड्यन्ते मध्यदेशजाः[13] ॥ १३
†नक्षत्रमादित्यवर्णो यस्य दृश्येत भास्करः । तस्य पीडा भवेत् पुंसः प्रयत्नेन[14] शिवः[15] स्मृतः ॥ १४

स्थालीपिठरसंस्थाने सुभिक्षं क्षुद्भयं नृणां[16] (णाम्) ।
विदुला(रा)भे[17](?) ■ राज्यस्य मृत्युः पिठरसंस्थिते[18] ॥ १५

सुवर्णवर्णे वर्षं[19] वा मासं[21] वा रजतप्रभे[22] । शस्त्रं शोणितवत् सूर्यो दाघो वैश्वानरप्रभे ॥ १६
शृङ्गी राज्ञां विजयदः कोशैं-वाहनवृद्धये । चित्रः सस्यविनाशाय भयाय च रविः स्मृतः ॥ १७
अस्तंगते यदा सूर्ये चिरं[28] रक्ता वसुन्धरा । सर्वलोकभयं विन्द्यात् तदा वृद्धानुशासने ॥ १८
उदयास्तमने ध्वस्तो[29] यदा चे कुरुते रविः । महा(हद्)भयं तदानीके[30] सुभिक्षं क्षेममेव च ॥ १९
एतान्यैव तु लिङ्गानि पर्वण्यां चन्द्र-सूर्ययोः । तदा राहुरिति ज्ञेयो विकारश्च न विद्यते ॥ २०
‡शेषमौत्पातिकं[30] प्रोक्तं विधानं भास्करं प्रति । ग्रहयुद्धे च वक्ष्यामि सर्वगत्या च साधयेत् ॥ २१

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते द्वाविंशोऽध्यायः ॥

मासे मासे समुत्थानं चन्द्रं पश्यति[33] बुद्धिमान् । वर्ण-संस्थान(?)राश्मौ तु ततो ब्रूयात् शुभा-शुभम् ॥ १
स्निग्धः श्वेतो विशालश्च पवित्रश्चन्द्रः शस्यते । किञ्चिदुत्तरशृङ्गश्च दस्यून्हन्यात् प्रदक्षिणम् ॥ २
अश्मकान् भरतानुड्रान् काशि-कलिङ्गमालवान् । दक्षिणद्वीपवासांश्च हन्यादुत्तरशृङ्गवान् ॥ ३
क्षत्रियान् यवनान् बाल्हीन् हिमवच्छ्रमास्थितान् । युगन्धर-कुरून् हन्याद् ब्राह्मणान् दक्षिणोन्नतः ॥ ४
भस्माभो निःप्रभो रूक्षः श्वेतशृङ्गोऽतिसंस्थितः[36] । चन्द्रमा न प्रशस्येत सर्ववर्णभयङ्करः ॥ ५
शबरान् दण्डकानुड्रान् मद्रांश्च द्रविडांस्तथा । शूद्रान् महासनान् वृ(व्रा)त्यान् समस्तान् सिन्धु-सागरान् ॥ ६
आनर्तान्मलकीरांश्च कोङ्कणान् प्रलयम्भिनः[37] । रामौवृत्तान् पुलिन्द्रांश्च मारुभ्रं[40] च कच्छजान् ॥ ७
प्रायेण हिंसते देशानेतांन् स्थूलस्तु चन्द्रमाः । समे शृङ्गे च विद्वेष्टी[41](?)तथा यात्रां न योजयेत् ॥ ८

* C युगधरामरुत्पुरा । 1 D °वर्णे । 2 D °मरुत्सु° । 3 A गौरिजान् । 4 C तु यथा । 5 C कबन्धः । 6-7 C प्रतिदृश्यते । 8 C °दुर्भगान् । 9 C दरदान् । 10 A D पाल्हवान्; C सोपारभान् । 11 A B D स्थान् । 12 C महीनर । 13 A °देशजाः । † C नक्षत्रं शिवमानस्य विवर्णो यस्य भास्करः । 14-15 A प्रमृतेवः; B प्रसमेति; D सप्रमेव । 16 B D चूर्णो, C घनो 17 A विदुलाम; B D विमेलाभे । 18 C स्थितं स्मृतेः । 19-20 C च शिवम् । 21 C वर्षे । 22-23 C रजनि° सन्निभे । •24 A केशे । 25-27 C दाघो वैश्वानरप्रभो । 28 A ध्वंसो । 29 C नीचैः । ‡ B This st. is not found in this Ms. 30 A शषोत्थित°; C उत्पादिकं । 31-32 C सर्वादिसह । † C Regarding this chapter almost all the stanzas are different and very corrupt, so their readings have not been noted. 33 A पश्येत; D दृश्यते । 34 A पूर्णिमाम् । 35 A तु । 36 A विसस्थिति । 37 B प्रलयं मिता । 38 A D रोमा° । 39 B मरुभ्रमं; D मरुस्थमं । 40 A सोल° । ¶ B this second half is missing in this Ms. 41 विदिष्टी ।

चतुर्थी पञ्चमी षष्ठी विपर्णो विकृतः शशी । यदा मध्येन[1] वा[2] याति पार्थिवं हन्ति मालवम् ॥ ९

काञ्ची किरावान् द्रमिलान् (द्रविडान्) शाक्यान्[3] लुब्धां(?)स्तु[4] सप्तमी ।

कुमारं युवराजानं चन्द्रो हन्यात् तथाऽष्टमी ॥ १०

नवमी मन्त्रिणश्चौरान् रथ्वगान् चरं[5]संज्ञिभान् । दशमी स्थविरान् हन्यात् तथा चै पार्थिवान्[6] मियान्[7] ॥ ११

एकादशी सयं कुर्यात्[8] ग्रामीणांश्च[9] तथा गवाम्[10] । द्वादशी राजपुरुषांश्च वस्त्रं सस्यं च पीडयेत् ॥ १२

त्रयोदशीचतुर्दश्योर्भयं शस्त्रं च मूर्च्छति[11] । संग्रामः संभ्रमश्चैव जायते वर्णसंकरः ॥ १३

नृपा भृत्यैर्विरुध्यन्ते राष्ट्रं चौरैर्विलुप्यते । पूर्णिमायां[12] हते चन्द्रे ऋक्षे वा विकृतप्रभे ॥ १४

ह्रस्वो रूक्षश्च चन्द्रश्च[13] श्यामश्चापि भयावहः । स्निग्धः शुक्लो मही(हा)श्रीमांश्च[14]न्द्रो नक्षत्रपूरये ॥ १५

श्वेतः पीतश्च रक्तश्च कृष्णश्चापि यथाक्रमम् । सुवर्णसुरसदश्चन्द्रो विपरीतो भयावहः ॥ १६

चन्द्रं प्रतिपदे(दि) योऽन्यो ग्रहः प्रविशते शुभः । संग्रामं जायते तत्र सप्तराष्ट्र[15]विनाशनैः[16] ॥ १७

द्वितीयायां[17] तृतीयायां[18] गर्भनाशाय कल्पते । चतुर्थ्यां च सुघाती च मन्दवृष्टि(ष्टिं)च निर्दिशेत् ॥ १८

पञ्चम्यां ब्राह्मणं सिद्धान् दीक्षितांश्चापि पीडयेत् । यवनाय च कल्यानि(?)षष्ठ्यां पीडां प्रजन्त्यतः ॥ १९

महाधनाश्च[19] पीड्यन्ते क्षिप्रमेक्षुरकां[20]स्तथा । ईतयश्चापि जायन्ते सप्तम्यां[21] सोमपीडने ॥ २०

विवर्णपुरुषश्चन्द्रो स्त्रीणां राजा निषेवते[22] । कपिलोऽपि[23] दक्षिणे मार्गे विन्द्यादग्निभयं तदा ॥ २१

सन्ध्यायां[24] कृत्तिकां ज्येष्ठां रोहिणीं पितृदेवताम् । चित्रां विशाखां मैत्रं च चरेद् दक्षिणतः शशी ॥ २२

सर्वभूतभयं विंद्यात् तदा घोरं तु मासिकम् । सस्यं वर्षं च वर्धन्ते चन्द्रस्तद्वद्[25] विपर्ययात् ॥ २३

रेवती-पुष्ययोः सोमः श्रीमानुत्तरगो यदा । महावर्षाणि कल्पन्ते तदा कृतयुगं यथा ॥ २४

गोवीथीमजवीथीं वा वैश्वानरपथं तथा । विवर्णः सेवते चन्द्रः सदाऽल्पमुदकं भवेत् ॥ २५

गजवीथ्यां नागवीथ्यां सुभिक्षं क्षेममेव च । सुप्रभे प्रकृतिस्थे च महा(हद्)वर्षं च निर्दिशेत् ॥ २६

वैश्वानरपथं प्राप्ते[27] चतुरङ्गं तु दृश्यते । सोमो विनाशकृल्लोके तदा वाऽग्निभयङ्करः ॥ २७

अजवीथीमागते चंद्रे क्षुत्तृषाग्निभयं[28] नृणाम्[29] । विवर्णो हीनरश्मिर्वा भद्रबाहुवचो यथा ॥ २८

गोवीथ्यां नागवीथ्यां च चतुर्थ्यां दृश्यते शशी । रोगं-शस्त्राणि चैराणां(णि)[30]वर्षस्य(र्षाणि) च विवर्धयेत् ॥ २९

ऐरावणे चतुर्थस्थो[31] महावर्षः स उच्यते । इन्द्रः प्रकृतिसंपन्नः सुरश्मिः श्रीरिवोज्वलः ॥ ३०

श्यामच्छिद्रश्च पक्षादौ यदा दृश्यते पां[32](?)सितः । चन्द्रमा सैस(रौर)वं घोरं नृपाणां कुरुते तदा ॥ ३१

धनुषा यदि तुल्यः स्यात्पक्षादौ दृश्यते शशी । ब्रूयात् पराजयं पृष्ठे[33] पथो[34] (?) प्रविविनिर्दिशेत् ॥ ३२

वैश्वानरपथेऽष्टम्यां तिर्यक्स्थो वा भयं भवेत् । परस्परं विरुध्यन्ते नृपाः प्रायः सुपर्वसः ॥ ३३

दक्षिणं मार्गमाश्रित्य[35] वध्यन्ते[36] प्रवरा नराः । चन्द्रस्तूत्तरमार्गस्थः क्षेम-सौभिक्षकारकः ॥ ३४

चन्द्र-सूर्यौ विशृङ्गौ तु मध्यच्छिद्रौ हतप्रभौ । युगान्तमिव कुर्वन्तौ तदा यात्रा न शस्यते ॥ ३५

---

1-2 A मध्ये भवा । 3 A स्वाक्या । 4 A लुब्ध्यंतु । 5 B D चर॰ । 6 D पार्थिवैः । 7 D प्रियान् । 8-9 B मासि नीचं, D गामिनीश्च । 10 D गवी । 11 B मूर्छितः; D मूर्छति । 12 B D पौर्णमास्यां । 13 A missing. 14 A महीमान्; D महीश्रीमान् । 15 B ॰राष्ट्रं । 16 A विनाशनम्; B विनाशते । 17 B चन्द्रेण द्वितीयाया । 18 B not found. 19 A B महाधनाश्च । 20 A देसुरकाः । 21 A स भूम्यां । 22 A निरोधते; D निवेशते । 23 A कलोऽपि । 24 D सन्ध्यानं । 25 A not found. 26 D not found. 27–28 A क्षुद्दशस्त्राग्निजं भयम् । 29 A D राग॰ । 30 B चौराणां । 31 B चतुर्थस्थः; D चतुर्थस्थो । 32 A [illegible] । 33 B D पृष्ठः । 34 B पथो; D पथो । 35 B आश्रया । 36 A वध्यन्ते ।

यस्य नक्षत्र-गतौ[1] कुर्यात् तां(?)वर्णसंकरम् (?) । विनाशं तत्र जानीयाद् विपरीते जयं वदेत् ॥ ३६

बहुचोदयको[3](?)ऽथ ततो भयप्रदो भवेत् । मंदघाते फलं मन्दं मध्यमं मध्यमेन तु ॥ ३७

चन्द्रमाः सर्वघातेन सोष्ट्राजार्श्च(?)भयङ्करः । तथापि[8] नागरान् हन्यात् यदा महसमागमे ॥ ३८

नागराणां तदा भेदो विज्ञेयस्तु पराजयः । यायिनामपि विज्ञेयं तदा युद्धं परस्परम् ॥ ३९

स्थावरा गुरवः प्राप्तो पुष्पोभिस्तत्रया(?)सह । शकस्यं चापरूपं[11] च माही[12] गुदभद्रशाम् (?) ॥ ४०

क्षत्रियाश्च भुवि ख्याताः कोशाम्बी देवता अपि । पीड्यन्ते तद्भक्ताश्च सुह्माश्च गुरोर्वधः[15] ॥ ४१

पशवः पक्षिणो वैद्या महिषाः शबराः शकाः ।

सिंहलाः द्रामिलाः(द्रविडाः)[19] काचा मंधुकाः पल्हवा नृपाः ॥ ४२

पुलिन्द्राः कोङ्कणा भोजाः कुरवो दस्यवः क्षमाः । शनैश्चरस्य घातेन पीड्यन्ते यवनैः सह ॥ ४३

यस्य यस्य च नक्षत्रमेकशो द्वन्द्वशोऽपि वा । ग्रहा घातं प्रकुर्वन्ति तं तं हिंसन्ति सर्वशः ॥ ४४

जन्मनक्षत्रघातेऽथ राज्ञो[24] यात्रा न सिद्ध्यति । नागरेणं हतश्चाल्पः स्वपक्षाय न यो भवेत् ॥ ४५

ग्रीष्माविजा गर्भा नागरा दारुजीविनः । गोपा गोजीविनश्चापि धनुस्सङ्ग्रामजीविनः ॥ ४६

तिलाः कुलस्था मापाश्च मापा मुद्गाश्चतुष्पदाः । पीड्यन्ते बुधघातेन स्थावरं यच्च किञ्चन ॥ ४७

कनकं मणयो रत्नं शकाश्च यवनास्तथा । गुं(गु)हारीः पह्लवा मुख्याः क्षत्रिया मन्त्रिणो बलम् ॥ ४८

स्थावरस्य(राश्च)यतीकांकुलये[32](?)सिंहला नृपाः ।

वणिजां (जो[33]) धनशल्यं[34](?)च पीड्यन्ते सूर्यघातने ॥ ४९

पौरेयाः शूरसेनाश्च शका बाह्लीकदेशजाः । मत्स्याः कच्छाश्च वत्सांश्च सौवीराः सौघिकास्तथा ॥ ५०

पीड्यन्ते केतुघातेन ये च सत्त्वास्तथाश्रयाः । निर्घाता पापवर्षं वा विज्ञेयं बहुशस्तथा ॥ ५१

पाण्ड्याः केरलाश्चोलाः सिंहलाः सात्विकास्तथा । कुपनास्तेवयायांश्च मूलका वनवासकाः ॥ ५२

किष्किन्धाश्च कुनाटाश्च प्रत्यमाश्च वनेचराः । रक्त-पुष्प-फलाश्चैव रोहिण्यां चन्द्र-सूर्ययोः ॥ ५३

एवं च जायते सर्वं कुर्वन्ति विकृतिं यदा । तदा प्रजा विनश्यन्ति दुर्भिक्षेण भयेन च ॥ ५४

अर्धमासं यदा चन्द्रं ग्रहा यान्ति विदक्षिणम् । तदा चन्द्रो जयं[43] कुर्यान्नागरस्य महीपतेः ॥ ५५

हीयमानं यदा चन्द्रं ग्रहाः कुर्वन्ति वामतः । तदा विजयमाख्याति नगरस्य महीपतेः ॥ ५६

गति-मार्गा-कृति-वर्णमण्डलान्यपि[46]वीथयः । चार-नक्षत्रचारांश्च ग्रहाणां शुक्रवद् विदुः ॥ ५७

चन्द्रस्य चारं चरतोऽन्तरिक्षे सुचारदुश्चारसमं प्रचारम् ।

चर्यायुतः खेचरसुप्रणीतो यो वेद भिक्षुः स चरेन्नृपाणाम् ॥ ५८

**इति नैर्ग्रन्थे भद्रबाहुके निमित्ते चन्द्रचारसंज्ञो नाम त्रयोविंशोऽध्यायः ॥**

1 A D °गोत्रे । 2 B D ता । 3 B बहुचोदधिक.; D बहुरोदधिकः । 4–5 B D मरणं तथा । 6 A मरणं । 7 B सोष्ट्राजा; D सौष्ट्राजा । 8 A नागरा । 9 A missing. 10–11 A सकस्य चापरूपं । 10–15 D सहसकस्य B पर्णं पच च मही गुद्सदत्तान् । 16 B बुधः । 17 B विचाः । 18 A शुकाः । 19 B D द्रमिलाः । 20 D काचाः । 21 B D घुघुकाः । 22 A B पह्लवाः । 23 A B नृपाः । 24 A राज्यं । 25 A नागराणां । 26–27 A राज्ञाव । 28 A कुलस्था । 29 B तथैव च । 30 D गुणाः । 31 B यौनाराः । 32 B कुमाराः । 33 D वसिजां । 34 D धनसंख्याः । 35 B गोरेयाः । 36 D वाल्याः । 37 A B सौगन्धिकाः । 38 A °पातेन । 39 A बहुना । 40 A राण्ड्याः । 41 A स्रोलाः । 42 A वनकं सक । 43 A °द्रय । 44 A मंडलान् । 45 A यच । 46 B चार्यां°; D वार्यो° ।

अथातः संप्रवक्ष्यामि ग्रहयुद्धं यथा तथा । जन्तूनां ज्ञायते[1] येन जयस्तूर्णं[3] पराजयौ[4](यः) ॥ १
गुरुः सौरश्च नक्षत्रं बुधकाश्चैव[5] नागराः । केतुरङ्गारकः सोमो राहुः शुक्रश्च यायिनः ॥ २
श्वेतः पाण्डुश्च पीतश्च कपिलः पद्मलोहितः[7] । वर्णास्तु नागरा[8] ज्ञेया ग्रहयुद्धे[9] विपश्चितैः ॥ ३
कृष्णोऽनीलश्च[*] श्यामश्च कपोतो भस्मसंनिभः । वर्णास्तु वाजि(यायि)नो ज्ञेया स्वर(ग्रह)युद्धे विपश्चितैः ॥ ४
रुक्षा ताराऽनिर्द्दिष्ण्यं[10] विद्युतोऽभ्राणि मारुवः । समस्निको[11] गणो[12] ज्ञेयो वधस्यापि[13] शुभा-शुभे ॥ ५
नातु(ग)रेऽस्य पिर्यः[14](?) शीघ्रः संयायी[15]ऽभिधीयते । मन्दगो यायिनोऽधस्तान्नागरं संयुगे भवेत् ॥ ६
नागरे तु हते विन्यान्नागराणां महद्भयम् । एवं यायिवधे[16] ज्ञेयं यायिनां तन्महद्भयम् ॥ ७
ह्रस्वो विवर्णो रूक्षश्च श्यामः कान्तोऽपसव्यगः । विरश्मि[17]श्चाप्यरश्मिश्च हतो ज्ञेयो ग्रहो युधि ॥ ८
स्थूलः स्निग्धः सुवर्णश्च सुरश्मिश्च प्रदक्षिणः । उपरिष्टा[18]त्प्रकृतिमान्[19] ग्रहो जयति तादृशः ॥ ९
उल्कादयो हरी[20] हन्युर्नागरं[21] संयुगे ग्रहैः[22] । नागराणां तदा विन्याद्भयं घोरमुपस्थितम् ॥ १०
यायिनो वामतो[23] हन्युर्ग्रहयुद्धे विमिश्रकाः[24] । पीड्यंते भौमपीडायां भयाः[25] सर्वत्र संयुगे ॥ ११
सौम्यजातं[26] तथा विप्राः सोम-नक्षत्र-राशयः । उदीच्याः[27] पार्वतेयाश्च पाञ्चालाधास्तथैव च ॥ १२
पीड्यन्ते सोम[28]घातेन नभो[29] धूमाकुलं भवेत् । तन्नामधेयास्तद्भक्ताः सर्वे पीड्यन्ते तान्समान् ॥ १३
बर्बराश्च किराताश्च पुलिन्दा द्रमिला (विडा) स्तथा । मालवा मलया वङ्गाः कलिङ्गाः पार्वतास्तथा ॥ १४
सूर्यका[30]श्च सुराः क्षुद्राः पिशाचा वनवासिनः । तन्नामधेयास्तद्भक्ताः पीड्यन्ते राहुघातने[31] ॥ १५
यायिनः स्यातया[32]ः (?) सस्यैः[33] (?) सोलपा[34] (?) द्रमिला (विडा)स्तथा ।
अङ्गा वङ्गाः कलिङ्गाश्च सौरसेनाश्च क्षत्रियाः ॥ १६
धाराश्चोमाश्च भोजा[35]श्च यहे[36] चन्द्र[37]श्च साधवः । पीड्यन्ते शुक्रघातेन सङ्ग्रामश्चाकुलो[38] भवेत् ॥ १७
श्वेतः श्वेतं ग्रहं यत्र हन्यात् सुप्रतिसो[39](सुप्रसितो)यदा । ब्राह्मणानां मिथो भेदो नागराणां तु निर्दिशेत् ॥ १८
लोहितो लोहितं हन्यात् यदा ग्रहसमागमे । क्षत्रियाणां मिथो भेदं नागराणां तु निर्दिशेत् ॥ १९
†पीतः पीतं यदा हन्याद् ग्रहं ग्रहसमागमे । वैश्यानां नागराणां च मिथो भेदं तदाऽऽविशेत् ॥ २०
कृष्णः कृष्णं यदा हन्यात् ग्रहं ग्रहसमागमे । शूद्राणामनयं घोरं यायिनां चैवमाविशेत् ॥ २१
‡श्वेतो नील[40]श्च पीतश्च कपिलः पद्मलोहितः । विपद्यते यदा वर्णो नागराणां तदा भयम् ॥ २२
§श्वेतो वाऽत्र यदा पाण्डुग्रहं संपद्यते स्वयम् । यायिनां विजयं ब्रूयाद् भद्रबाहुवचो यथा ॥ २३

---

1 A D जायते । 2-4 B D तूर्णं जयपराजयौ । 5 A °श्चौमश्च । 6A °कन्यैव । 7 D पद्म° । 8 A यायिनः । 9 A स्वर° । * D This st. is not found in this Ms. 10 A द्युति । 11 A सात्मश्चिकः; D सामित्रकः । 12 A गणः । 13 A D वधस्य । 14 A D चः । 15 A सन्स्यायात् । 16 A वधो । 17 A विरश्मि । 18–19 A उपरि सृत्यु कृतिमान् । 20 A हरः । 21 A न गिरं । 22 A B ग्रहः । 23 A यो मतः; B नामतः । 24 A D विमिश्रकः । 25 B वयः; D नय । 26 B सौम्यानां । 27 A एतुभः; B °एतुराः । 28 A सोम° । 29 B D नतो । 30 A सूर्यकाः; D सुर्यकाः । 31 D °घातेन । 32 A B स्यातयः । 33 A सस्यो; B सास्सो । 34 A सौलपाः; B सोलाप । 35 D सोजाः । 36 A जहे; D यते । 37 D चंद्रस । 38 A अकुलः । 39 A प्रसतिसो; D प्रतिसो । † B This st. is there in this Ms. but as it is not numbered there is anomaly in numbering from this st. onwards. ‡ B This st. is also not numbered so this st. and the next st. make one stanza in this Ms. 40 B not found. § A This st. follows the next st. in this Ms.

*कृष्णो नीलस्तथा श्यामः कपोतो भस्मसंनिभः । विपद्यते यदा वर्णो न तदा यायिनां भयम् ॥ २४
एवं शिष्टेषु वर्णेषु नागरेषु विचारतः । उत्तरं उत्तरा वर्णा यायिनामपि निर्दिशेत् ॥ २५
रक्तो वा यदि वा नीलो ग्रहः सम्पद्यते स्वयम् । नागराणां तदा विन्द्यात् जयं वर्णमुपस्थितम् ॥ २६
नीलाद्याः स्युर्ये वर्णा उत्तरा उत्तरं पुनः । नागराणां विजानीयान् निग्रन्थे (निर्ग्रन्थ !) ग्रहसंयुगे ॥ २७
ग्रहो ग्रहं यदा हन्यात् प्रविशेद् वा भयं तदा । दक्षिणः सर्वभूतानामुत्तरोऽण्डजपक्षिणाम् ॥ २८
ग्रहौ गुरु-बुधौ विन्द्यादुत्तरद्वारमाश्रितौ । शुक्र-सूर्यौ तथा पूर्वां राहु-भौमौ च दक्षिणाम् ॥ २९
अपरां चन्द्र-सूर्यौ तु मध्ये केतुमसंशयम् । क्षेमङ्करो ध्रुवाणां च यायिनां च भयङ्करः ॥ ३०
अहश्च पूर्वसन्ध्या च स्थावरप्रतिपुद्गलाः । रात्रिश्चापरसन्ध्या च यायिनां प्रतिपुद्गलाः ॥ ३१
रोहिणीं च ग्रहो हन्यात् द्वौ वाऽथ बहवोऽपि वा । अपग्रहं तदा विन्द्याद् भयं वाऽपि न संशयः ॥ ३२
शुक्रः शङ्खनिकाशः स्यात्पीतो बृहस्पतिः । प्रवालसदृशो भौमो बुधस्त्वरुणसंनिभः ॥ ३३
शनैश्चरश्च नीलाभः सोमः पाण्डुर उच्यते । बहुवर्णो रविः केतू राहुर्नक्षत्र एव च ॥ ३४
उदकस्य प्रभुः शुक्रः सस्यस्य च बृहस्पतिः । लोहितः सुख-दुःखस्य केतुः पुष्प-फलस्य च ॥ ३५
बुधस्तु बल-वित्तानां[4] सर्वस्य च रविः स्मृतः । दोकान्दनां[5](?)वल्लीनां च शशाङ्कः प्रभुरुच्यते ॥ ३६
धान्यस्यार्थं[6] तु नक्षत्रं तथाऽऽरः सर्वशः प्रभुः । शनिश्च सुख-दुःखस्य सर्वे ह्येते त्रिदण्डवत् ॥ ३७
वर्णानां शङ्करो विन्द्याद् द्विजातीनां भयङ्करः । स्वपक्षे परपक्षे च चातुर्वर्ण्यं विभाव्यते ॥ ३८
वातः श्लेष्मा गुरुर्ज्ञेयश्चन्द्रः शुक्रस्तथैव च । वातिकौ[7] बुध-सौरौ तु पैत्तिको भौम उच्यते ॥ ३९
पित्तश्लेष्मान्तिकः सूर्यो नक्षत्रं देवता भवेत् । राहुस्तु भौमो विज्ञेयः प्रकृतौ च शुभा-शुभे ॥ ४०
आर्येसं मावित(?) पुष्यो धनिष्ठा पौष्णवी च भूत् । केतु-सूर्यौ तु वैशाखौ राहुर्वरुणसंभवः ॥ ४१
शुक्रः सोमश्च स्त्रीसंज्ञः शेषास्तु पुरुषा ग्रहाः । नक्षत्राणि विजानीयान्नामभिर्दैवतैस्तथा ॥ ४२
ग्रहयुद्धमिदं कृत्स्नं यः सम्यगवधारयेत् । स विजानाति निर्ग्रन्थो लोकस्य तु शुभा-शुभम् ॥ ४३

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते ग्रहयुद्धं नाम चतुर्विंशोऽध्यायः ॥

नक्षत्रं ग्रहसंपत्त्या कृत्स्नस्यार्घं शुभा-शुभम् । तस्मात् कुर्यात् सदोच्छ्रायं नक्षत्रैर्ग्रहदर्शने ॥ १
सर्वे[13] यद्युत्तरे काष्ठे ग्रहाः स्युः स्निग्धवर्चसः । तदा वस्त्रं च न माह्यं सुसमासाम्यमर्पताम् (?) ॥ २
क्ष(क्षा)रं क्षौद्रं यवाः कंगुरुदाराः सस्यमेव च । दुर्भाग्यं सन्निगच्छंति नैवानिचया यद्बुधः(?) ॥ ३
षष्टिकानां विरलानां द्रव्यस्य[14] च प्रणर्स्य[15] च । सन-कोद्रव-कंगूनां नीलाभानां शनैश्चरः ॥ ४
यव-गोधूम-व्रीहीणां शुक्लधान्य-मसूरयोः । शालीनां चैव द्रव्याणां शुक्रस्य प्रतिपुद्गलाः ॥ ५
मधु-सर्पिः-शृगालाना क्षीराणां च तथैव च । कुसुंभस्यातसीनां च गर्भाणां च बुधः स्मृतः ॥ ६
कोशधान्यं सर्षपाश्च पीतं रक्तमथाभिजम् । अङ्गारकं विजानीयात् सर्वेषां प्रतिपुद्गलाः ॥ ७

---

* D This st. ought to have been numbered as 23 but it has been numbered as 24 thus making it tally with A † A This st is missing in this Ms. 1 A ग्रंथ° । 2 A पूर्व° । 3 B शशस्य । 4 B D बलवित्तानाम् । 5 B D दोदृकानां । 6 B धान्यर्घं°; D धन्यार्थं° । 7-8 [illegible] वातकेतु च । 9 A अर्थ° । 10 D नक्षत्र । 11 D [illegible] । 12 A D सर्वा । ‡ A सुममासाम्य पर्यंता; B सुसमास्यमर्यंता । 13 B सर्वा । 14-15 A द्रणकस्य ।

महाधान्यस्य महतामिक्षूणां शर[1]-वंशयोः । गुरूणां मंद[2]-पीतानामथो[3](थ)ज्ञेयो बृहस्पतिः ॥ ८
मुक्ता-मणि-जलेशानां सूरं-सौवीर-सोमिनाम् । शृङ्गिणामुदकानां च सौ(सो)म्य(म)स्य प्रतिपुद्गलाः ॥ ९
उद्भिजा(ज्जा)नां च जन्तूनां[5] कन्द-मूल-फलस्य च । उष्णवीर्यविपाकस्य रवेस्तु प्रतिपुद्गलाः ॥ १०
नक्षत्रे[6] भार्गवः सोमः शोभन्ते(ते)सर्वशो यथा । यथाहारं तथा विन्द्यात् सर्ववस्तु यथाविधि ॥ ११
विवर्णा यदि सेवन्ति(न्ते)महा वै[7] राहुसहमाः । दक्षिणा दक्षिणे मार्गे वैश्वानरपथं प्रति ॥ १२
गिरिनिम्ने[10] च निम्नेषु नदी-पल्वलवारिषु । एतेषु वापयेद् वीजं स्थलं वर्ज्ज(र्ज्यं) तथा भवेत् ॥ १३
मर्द्दा मलवेषु राष्ट्राणां[14] सिन्धुसागरे । एतेष्वपि सदा मुण्णं(?) प्रियमन्यत् प्रसूयते ॥ १४
कृत्तिका-रोहिणीयुक्ता बुध-चन्द्र-शनैश्चराः । यदा सेवन्ते सहितास्तदा विन्द्यादिदं फलम् ॥ १५
आजविकं[16] गुडं तैलं कार्पासो मधु-सर्पिषी । सुवर्ण-रजते मुद्गाः शालयस्तिलमेव च ॥ १६
स्निग्धे याम्योत्तरे[17] मार्गे पञ्चद्रोणेन शालयः । दृशाढकं[18] प्रसक्तं स्यात् दक्षिणेन षडाढकम् ॥ १७
उत्तरेण तु रोहिण्यां चतुष्कं कुम्भमुच्यते । दशकं प्रसङ्गतो विन्द्यात् दक्षिणेन चतुर्दशम् ॥ १८
नक्षत्रस्य यदा गच्छेद् दक्षिणं शुक्र-चन्द्रमाः । सुवर्णं रजतं रत्नं कल्याणं प्रियतामियुः ॥ १९
धान्यं[19] यत्रं[20] प्रियं विन्द्याद्गावो नात्यर्थदोहिनः(?) । उत्तरेण यदा याति नैतानि चिनुयात् तदा ॥ २०
उत्तरेण तु पुष्यस्य यदा युज्यति[22] चन्द्रमाः । भौमस्थं दक्षिणे पार्श्वे मघासु यदि तिष्ठति ॥ २१
मलया(यी) माल[25]-वैदेहा यौधेयाः संज्ञिनायकाः । सुवर्णं रजतं वस्त्रं मणिर्मुक्ता तथा प्रियम् ॥ २२
चन्द्रः शुक्रो गुरुरसोमो[28] मघानां यदि दक्षिणे । वस्त्रं च द्रोणमेघं[29] च निर्दिशेन्नात्र संशयः ॥ २३
आह्लालिश्चं वापी च भद्रं[31] चैव यदोत्तरे[32] । ग्रहैर्युक्तस्तु य(य)दा कुम्भं तु पञ्चकम् ॥ २४
राहुः केतुः शशी शुक्रो भौमश्चोत्तरतो यदा । सेवन्ते चोत्तरं द्वारं यात्यस्तं वा कदाचन ॥ २५
निवृत्तिं चापि कुर्वन्ति भयं देवेषु सर्वशः । बहुतोयान् समान् विद्यान्महाशालीश्च वापयेत्[35] ॥ २६
कार्पासास्तिल-माषाश्च सर्पिश्चात्र प्रियं तथा । आशुधान्यानि वर्धन्ते योगक्षेमं च हीयते ॥ २७
चन्द्रस्य दक्षिणे पार्श्वे भार्गवो वा विशेषतः । उत्तरांस्तारकान् प्राप्य तदा विन्द्यादिदं फलम् ॥ २८
महाधान्यानि पुष्पाणि हीयन्ते चाशुभास्तथा[37] । कार्पास-तिल-माषाश्च सर्पिश्चैवार्घते[38] तदा ॥ २९
चित्रायां दक्षिणे पार्श्वे शिखरी[39] नाभि वारभा । तयेन्दुर्यदि दृश्येत तदा बीजं न वापयेत् ॥ ३०
गवाले(मे)ण हिरण्येन सुवर्ण-मणि-मौक्तिकैः । महिष्यजाविभिर्वस्त्रैर्धान्यं क्रीत्वा भै वापयेत् ॥ ३१
चित्रायां तु यदा शुक्रश्चन्द्रो भवति दक्षिणः । षड्गुणं जायते धान्यं योगक्षेमं च जायते ॥ ३२
इन्द्रा-मित्रेयसंयुक्ता यदि सर्वे ग्रहाः कृशाः । अभ्यन्तरेण मार्गस्यास्तारका यास्तु याहताः ॥ ३३
कंगु-दार-तिला मुद्राश्चणकाः षष्टिकाः शुकाः । चित्रायोगं न सर्पेत चन्द्रमा उत्तरो भवेत् ॥ ३४

1 A रस°; D सर° । 2 A मंत°; D मथ । 3 B महोर्यो, D महा । 4 A सौव° । 5 A D जन्तू: भाम् । 6 B D नक्षत्र । 7-9 B चोराहु सहमा । 10-11-12 A निम्नवनेषु । 13 A मल्दा । 14 B D सुराष्ट्रान् । 15 A शुक्रः । 16 B D अजाविक । 17 A यस्योत्तरे । 18 A प्रदाकं । 19-20 B धान्यमंत्र, D धान्यमत्र । 21 B नात्यर्थदेहिनाः, D नात्यर्थहित. । 22 B युध्यति । 23 A वैसेऽस्य । 24 B मलया । 25 D मल° । 26 A यौपधेयाः; B चोधेया । 27 B संज्ञि°, D संज्ञि° । 28 B भौमः । 29 A °मघं; 34 B °सिचन । D missing । 30 B आह्वालिक. । 31 B चन्द्रः । 32 A D उत्तरा । 33 A मस्त° । 39 B शिपरी । 35 B चापयेत् । 36 A D अशु° । 37 B चामराः, D चाशुर° । 38 A अर्घते, D अर्घते । 40 B माग । 41 A ते इन्दु । 42 B D सि° । 43 A B इन्द्राणि° । 44-45 B D षष्टिकाशुकाः ।

संग्राह्य च तदा धान्यं योगक्षेमं च जायते । अल्पसारा भवन्त्येते चित्रा वर्गा[1] न संशयः ॥ ३५
विशाखामध्यगः शुक्रस्तोयदो धान्यवर्धनः । समर्घं[2] यदि विज्ञेयं दशद्रोणकयं[3] वदेत् ॥ ३६
यायिनौ चन्द्र-शुक्रौ तु दक्षिणामुत्तरो तदा(?) । तारा-विशाखयोर्घातां तदाऽघन्ति चतुष्पदाः ॥ ३७
दक्षिणेनानुराधाया-यदा च व्रजते शशी । अप्रमश्च ग्रहीणश्च वर्षं द्रोणाय कल्पयेत् ॥ ३८
ज्येष्ठा-मूलौ यदा चन्द्रो दक्षिणं व्रजते प्रभः । तदा सस्यं च वर्षं च वरीरी[4] (?)वार्थ[5] (?)विनश्यति ॥ ३९
प्रजानामनयो[6] घोरस्तदा जायति[8] तामसः[9] । प्रस्थकैयस्य वसस्य तेन क्षीयन्ति[10] तां प्रजाम् ॥ ४०
मूलं मन्देय(?)सेवन्ते[11](वेत)यदा दक्षिणतः शशी । प्रजातसर्वधान्यानां आढका तु सदा भवेत् ॥ ४१
कृत्तिका रोहिणी चैव पुष्यौ-श्लेषा-पुनर्वसून्[14-16] । प्रजते दक्षिणश्चन्द्रो दशप्रस्थं तदा भवेत् ॥ ४२
मघां विशाखां च ज्येष्ठाऽनुराधे मूलमेव च । दक्षिणे* व्रजते शुक्रश्चन्द्रे तदाऽऽढकमेव च ॥ ४३
कृत्तिकां रोहिणीं चित्रा विशाखा च मघा यदा । दक्षिणेन ग्रहा यान्ति चन्द्रस्त्वाढकविक्रयः ॥ ४४
गुरुः शुक्रश्च भौमश्च दक्षिणाः सहिता यदा । प्रस्थकयं तदा वर्षेयान्ति मृत्युमुखं प्रजाः ॥ ४५
उत्तर भजते मार्गं शुक्र[17]पृष्ठ तु चन्द्रमाः । महाधान्यानि वर्धन्ते कृष्ण[18]धान्यानि दक्षिणे ॥ ४६
दक्षिणं चन्द्रशृङ्गं[19] च यदा वृद्धतर भवेत् । महाधान्यं तदा वृद्धं[20] कृष्णधान्यमथोत्तरम् ॥ ४७
कृत्तिकानां मघानां च रोहिणीनां विशाखयोः । उत्तरेण महाधान्यं कृष्णधान्यं च दक्षिणे ॥ ४८
यस्य देशस्य नक्षत्र पीड्यते[21]हि[22] यदा यदौ । त देशं भिक्षवः स्फीताः सश्रयेयुस्तदा तदा ॥ ४९
धान्यं घत्समिति ज्ञेयं तस्यार्घं[24] च शुभा-शुभम् । ग्रहनक्षत्रसप्रत्न(प्राप्तौ?) कथिता(त)भद्रबाहुना ॥ ५०

॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते संग्रहयोगार्थकाण्डं[25]
नाम पञ्चविंशोऽध्यायः ॥

---

नमस्कृत्य महावीरं सुरा-सुरनमस्कृतम् । स्वप्नाध्याय[26] प्रवक्ष्यामि शुभा-शुभसमीरितम् ॥ १
स्वप्नमाला दिवास्वप्नो[27] नष्टचिन्तामयः[28] फलाः । प्रकृता-कृतस्वप्नेश्च नैते ग्राह्या निमित्ततः ॥ २
कर्मजा द्विविधा यत्र शुभाश्चात्राशुभास्तथा । त्रिविधाः संग्रहाः स्वप्नाः कर्मजाः पूर्वचिन्तिताः ॥ ३
भवान्तरेषु चाभ्यस्ता भावाः सफल-निष्फलाः । तान् प्रवक्ष्यामि तत्त्वेन शुभा-शुभफलौ[30]निमान्[31] ॥ ४
जलं जलरहं धान्य सदलाम्भोजमाजनम् । मणि-मुक्ता-प्रवालाश्च[32] स्वप्ने पश्यन्ति श्लेष्मिकाः ॥ ५
रक्त-पीतानि द्रव्याणि यानि[34] पुष्टान्यग्निसंभवान्[35] । तस्योपकरणं विन्द्यात् स्वप्ने पश्यन्ति पैत्तिकाः ॥ ६

---

1 B °वर्पा । 2 A समर्थं । 3 B °क्रम; D °क्षय । 4 B D °सरा । 5 B दात्ता, D दतो । 6-7 B सरी चाप्य, D शरी चाप्य । 8 D श्रामय । 9 A यान्ति । 10 A तां समाम्, D तावसाम् । 11 A प्रस° । 12 B क्षीयन्ति । 13 B सतैव, D मतेव । 14–16 B. चैत्र पुष्य पुनर्वसु; D चैत्र is not found in this Ms The rest is just like B * B This second half is not found in this Ms 17 A शुक्रः । 18 A कृष्ण° । 19 A °शृङ्ग । 20 D क्षेत्र । 21–22 A न पीड्यते । 23 A यदा । 24 A °थर्य । 25 B D ग्रहसयोगार्थकांड । 26 A B स्वप्नान्यह । 27 B °स्वप्न । 28 B °मयो । 29 A चा भ्यस्ता । 30-31 A °फलस्थितान्, D फल स्थितम् । 32 A °मुक्ति°, D °मुक्ति° । 33 D °प्रवालाम । 34-36 B यान्पुष्पा न्यग्निसंभिवा; D यानष्टान्यग्नि समवाम् ।

च्यवनं[1] प्लवनं यानं पर्वताग्रे द्रुमं गृहम् । आरोहन्ति नराः स्वप्ने वातिकाः पक्षगामिनः[2] ॥ ७
सिंह-व्याघ्र-गजैर्युक्तो गो-वृषा-श्वैर्नरैर्युतः[3] । रथमारुह्य यो याति पृथिव्यां स नृपो भवेत् ॥ ८
प्रासादं कुञ्जरवरानारुह्य सागरं विशेत् । तथैव च विकथेतं[5] तस्य नीचो नृपो भवेत्(?) ॥ ९
पुष्करिण्यां तु यत्तीरे भुञ्जीत शालिभोजनम् । श्वेतं गजं समारूढः स राजा न चिराद् भवेत् ॥ १०
सुवर्ण-रूप्यभाण्डे वा यः पूर्वनवरा(?)स्नुयात् । प्रासादे वाऽथ भूमौ वा याने वा राज्यमाप्नुयात् ॥ ११
श्वेते पुरीषे मूत्रेऽथ यः स्वप्ने च विकुप्यति । राजा राज्यफलं वाऽपि सोऽचिरात् प्राप्नुयान्नरः ॥ १२
यत्र वा तत्र वा स्थित्वा जिह्वायां लिखते नरः । दीर्घयां[9] रक्तयां[10] स्थित्वा स नीचोऽपि नृपो भवेत् ॥ १३
भूमिं ससागरजलां सशैल-वन-काननाम् । बाहुभ्यामुद्धरेद्यस्तु स राज्यं प्राप्नुयान्नरः ॥ १४
आदित्यं वाऽथ चन्द्रं वा यः स्वप्ने स्पृशते नरः । श्मशानमध्ये निर्भीकः[12] परं हत्वा चमूपतिम् ॥ १५
सौभाग्यमर्थं[13] लभते लिङ्गच्छेदात् स्त्रिया नरः । भगच्छेदे यथा नारी पुरुषार्थं[14] प्राप्नुयात् फलम् ॥ १६
शिरो वा छिद्यते यस्तु सोऽसिना छिद्यतेऽपि वा । सहस्रलाभं जानीयाद् भोगांश्च विपुलान् नृपः ॥ १७
धनुरारोहते यस्तु विस्फारण-समार्जने । अर्थलाभं विजानीयात् जयं युधि[15] रिपोर्वधम् ॥ १८
द्विगादं(?)हस्तिनारूढः शुक्लो वा समलङ्कृतः । यः स्वप्ने जायते भीतः समृद्धिं लभते सतीम् ॥ १९

देवान् साधु-द्विजान् प्रेतान् स्वप्ने पश्यन्ति पुष्टिभिः[16] ।
रोहिता मुसलमिच्छन्ति[18] विपरीते विपर्ययः ॥ २०

गृहद्वारं विषर्णमिज्याद्धां यो[21] गृहं[22] नरः । व्यसनान्मुच्यते शीघ्रं स्वप्नं दृष्ट्वा हि तादृशम् ॥ २१
प्रपानं[24] यः पिबेत्पानं बद्धो वा योऽभिमुच्यते । विप्रस्य सोमपानाय शिष्याणामर्थवृद्धये ॥ २२
निम्नं[26] कूपजलं[27] छिद्रान् यो भीतः स्वर्गमारुहेत् । स्वप्ने स वर्धते सर्वं-धन-धान्येन मेधसा ॥ २३
श्मशाने शुष्कदारुं वा वह्निं[30] शुष्कद्रुमं यथा । यूपं[31] वा योऽधिरूढः स्यात् स्वप्ने व्यसनमाप्नुयात् ॥ २४
मधु-सीसा-यसं रज्जुं नानकं[32] मक्षिकायुतम् । यस्मिन् स्वप्ने[34] प्रयच्छन्ति तस्यासौ ध्रुवो भवेत् ॥ २५
अकालजं फलं पुष्पं काले वा यच्च गर्हितम्[35] । यस्मै स्वप्ने प्रदीयेते तदुत्सायासलक्षणम् ॥ २६

अलक्तकं वाऽथ[36] रोगो(गं) वा निवातं यस्य वेश्मनि ।
गृहदाघ(ह)मवाप्नोति चौरैर्वा शस्त्रपातनम् ॥ २७
अगम्यागमनं[37] चैव सौभाग्यायाभिवृद्धये ।
अलं कृत्वा यथा पीत्वा यस्यै वचयाश्च यद् भवेत् (?) ॥ २८

मुनि(शुनीं)[39] चतुष्पदं स्वप्ने यो भयं विद्य बुध्यते । पुनर्न भवति भार्या सुरूपी सुपरिच्छदा ॥ २९
वीणां विषं[41] च वल्लकीं स्वप्ने गृह्य विबुध्यते । कन्यां तु लभते भार्यां कुलरूपविभूषिताम् ॥ ३०

---

1 स्थवनं; D स्वसनं । 2 A पक्षगामति ; D पित्तगामिनः । 3 A यथा; D युतो । 4 B तंयामा° । 5 B विकम्पैव, D विकापूत । 6–7–8 A These are missing in this Ms. 9 B दीर्घं°; D दीर्घजा । 10 B जरे । 11A यपि नेतिष्ठन् । 12 B तृचो; D कथा । 13 A सर्वं; D सहर्षं । 14 A B पुरुषः । 15 D युधे । 16 A तुष्टिभिः । 17 D missing. 18 D सुच्छन्ति । 19 BD विवृणुम । 20 D अविद्यात् । 21-22 B D योग्यं । 23 BD वासनाम् । 24 A प्रपातं; B प्रापनो । 25 A यत्र । 26 A C D निम्नाद् । 27 B D ०जलात् । 28 A चलम् । 29 A तुल्या; D तु स्यात् । 30 D वाह्न्यं । 31 B रूपं; D यूपं । 32 B नानाकं । 33 B D मधु । 34 D प्रश्ने । 35 B गर्वितम्; D गर्भितम् । 36 B वांध्य°; D वाम्य° । 37 A गमनम् । 38 D not found. 39 D शकुनिं । 40 A मनुरूपा । 41–42 A विपञ्चीं; D विपंच ।

विषेण म्रियते यस्तु विषं वाऽपि पिबेन्नरः । न[*] भीतो धन-धान्येन वध्यते[1] न चिराद्धि सः ॥ ३१
उपाचरेदासवाज्ये मृतो गत्वा (?)अकिंचनः । ब्रूयाद् वा सद्वचः किञ्चिन्नसत्यं वृद्धये हितम् ॥ ३२
प्रेतयुद्धं[2] समारूढो दंष्ट्रियुक्तं च यो रथम् । दक्षिणाभिमुखो याति म्रियते सोऽचिरान्नरः ॥ ३३
वराहयुक्ता या नारी ग्रीवाबद्धं[3] प्रकर्षति[4] । सा तस्य पश्चिमा रात्री[5] नगे भवति पर्वते ॥ ३४
खर-शूकरयुक्तेन खरोष्ट्रेण वृषेणं[6] वा । रथेन दक्षिणं याति दिशं[7] स म्रियते नरः ॥ ३५
कृष्णवासो यदि भूत्वा प्रवासं नावगच्छति । मार्गे स भयमाप्नोति नारी दक्षिणगा[8] वधम्[9] ॥ ३६
यूपं[10]मेकखरं शूलं[11] यः स्वप्नेष्वभिरोहति । सा तस्य पश्चिमा रात्री यदि साधु न पश्यति ॥ ३७
दुर्वासाः कृष्णभस्मश्च वामैतैलविपक्षितम्[12][13](?) । सा तस्य पश्चिमा रात्री यदि साधु न पश्यति ॥ ३८
अभक्ष्यभक्षणं चैव पूजितानां च दर्शनम् । कालपुष्पफलं चैव लभ्यतेऽर्थस्य सिद्धये[14] ॥ ३९

नरार्भवेश्मनः सालो[15] यः स्वप्ने वदते[16] नरः ।
सोऽचिराद्[17] वमते[18] लक्ष्मीं क्लेशं चाप्नोति दारुणम् ॥ ४०

दर्शनं ग्रहणं भर्मं[19] शयना-सनमेव च । प्रशस्तमाममा(मां)सं च स्वप्ने वृद्धिकरं हितम् ॥ ४१
पक्वमांसस्य चासाय(स्य)[20] भक्षणं ग्रहणं तथा । स्वप्ने व्याधिभयं विन्द्याद् भद्रबाहुवचो यथा ॥ ४२
छर्दने मरणं विन्द्यादर्थनाशो[21] विरेचने । छत्रो यानाद्यधान्यानां[22] ग्रहणं मार्गमादिशेत् ॥ ४३
मधुरे निवेशे[23] स्वप्ने दिवा च यस्य वेश्मनि । तस्यार्थनाशं नियतं मृतो वाऽप्यभिनिर्दिशेत् ॥ ४४
यः स्वप्ने गायते हसते नृत्यते पठते नरः । गायते(ने) रोदनं विन्द्यात् नृत्यते(नर्तने) वध-बन्धनम्[24] ॥ ४५
हसने शोचनं ब्रूयात् कलहं पठने तथा । बंधने स्थानमेव स्यात् मुक्तौ[25] देशान्तरं व्रजेत्[26] ॥ ४६
सरांसि सरितो वृक्षान् पर्वतान् कलशान् गृहम्[27] । शोकार्त्तः पश्यते स्वप्ने स च शोकोऽभिवर्धते ॥ ४७
आसन शयनं यानं गृहं वस्त्रं च भूषणम् । स्वप्ने यस्याभिदीयन्ते सुखिनः श्रियमाप्नुयात् ॥ ४८
अलङ्कृतानां द्रव्याणां वाजि-वारणयोस्तथा । वृषभस्य च शुक्लस्य दर्शने प्राप्नुयाद् यशः ॥ ४९
पताकामसियष्टिं वा शक्तिं मुक्तान्[28] सकाञ्चनान् । दीपिकां लभते स्वप्ने योऽपि ते लभते धनम् ॥ ५०
मूत्रं[29] वा कुरुते स्वप्ने पुरीषं वा सलोहितम् । प्रतिबुध्येत चार्थं(?) लभते सोऽर्थनाशनम् ॥ ५१

अहिर्वा वृश्चिकः कीटो यं स्वप्ने दशते नरम् ।
प्राप्नुयात् सोऽर्थवान्[30] यः[31] स[32] यदि भीतो न शोचते ॥ ५२

पुरीषं छर्दितं यस्तु भक्षयेन्न च कुत्सते[33] । मूत्रं रेतश्च रक्तं च स शोकात् परिमुच्यते ॥ ५३
फालेयं चन्दनं रोध्रं घर्षणे नैं प्रशस्यते । अत्र[34] लेपानि[35] पिष्टानि तान्येव धनवृद्धये ॥ ५४

---

* A This line and the next line are not found in this Ms. 1 D बध्यते । 2 B °युक्तं । 3 A °युद्ध । 4 B प्रवर्पति । 5 B रात्रौ । 6 A वृषेण । 7 A दिवसं । 8-9 A मागधम् । 10 A द्रव । 11 D मूकं । 12 B वाम°, D वाम° । 13 B विपक्षितान्, D विमाक्षितं । 14 A वृद्धये । 15 A वाग्मं । 16 B क्रीडः । 17 B चरते । 18 B चिरात् । 19 A व्यचते, D वेमते । 20 A भक्षः; B missing in this Ms. 21 A वा सरया; D वा । 22 A not found. 23 B भर्तां° । 24 A यातानां, D यानानां । 25 B निवेशा । 26-28 D मृत्युमेव निबंधनम् । 29 A युक्तौ । 30 B व्रजेत् । 31 B D महान् । 32 A मुक्तां; D उल्कां । 33 A मुत्र । 34 B तपायान्; D चायश्च । 35 D अर्थदा । 36-37 B पश्यन्; D not found. 38 D कुप्यते । 39 A यः । 40-41 B अनलेपनानि; D अङ्कुलेपनानि ।

रक्तानां करवीराणामुत्पलानामुपानयेत्(?) । लम्भो(भे)वा दर्शने[1] स्वप्ने प्रयाणाका(यं) विधीयते ॥ ५५
कृष्णं वासो[4](?)हयं[5] कृष्णं योऽभिरूढः प्रयाति च । दक्षिणां दिशमुद्विग्नः सो[6]ऽपि[7] प्रेतार्यं तत्त्वतः ॥ ५६
आसनं शाल्मलीं वापि कदलीं पारिभद्रकम् । पुष्पितं यः समारूढः सचित्तमधिरोहति ॥ ५७
रक्ताक्षी विकृता काली नारी स्वप्ने च कर्षति । उत्तरं[11] दक्षिणां दिशं मृत्युः शीघ्रं समीहते ॥ ५८
जटीं मुण्डीं विरूपाक्षीं[12] मलिनां मलिनवाससाम् । स्वप्ने यः पश्यति ग्लानि समूहे भयमाविशेत् ॥ ५९
इ्ादशं[13](दक्षिणं) पुण्डरीकं[14] वा सव्यं कमलमेव[15] च ।
दृष्ट्वा स्वप्ने विबुध्येत ग्लानिं तस्य समादिशेत् ॥ ६०
स्थले वाऽपि विकीर्येत जले वा नाशमाप्नुयात् । यस्य स्वप्ने नरस्यास्य तस्य विन्द्यान्महद्भयम् ॥ ६१
वल्ली-गुल्ममयो वृक्षो वल्मीके यस्य जायते । शरीरे तस्य विज्ञेयं वर्दी गर्स्तु(तदङ्गस्य)विरेचनम् ॥ ६२
माल्ो[20] वा वेणुगुल्मो वा खर्जूरो हरितो[21] द्रुमः । मस्तके जायते स्वप्ने तस्य साप्ताहिकः स्मृतः ॥ ६३
हृदये यस्य जायन्ते हृद्रोगेण विनश्यति । अनङ्ग(यदङ्गे) जायमानेषु तदङ्गस्य विनिर्दिशेत् ॥ ६४
रत्नमाला तथा माला रक्तं वा सूत्रमेव च । यस्मिन्नेवावबध्येत तदङ्गे न विकृश्यति ॥ ६५
ग्राहो[23] नरो(रं) नगं कश्चित् यदा स्वप्ने च कर्षति । बद्धस्य मोक्षमाचष्टे मुक्तिं बद्धस्य निर्दिशेत् ॥ ६६
पीतं पुष्पं फलं यस्मै रक्तं वा संप्रदीयते । कृताकृतंसुवर्णं वा तस्य सौभस्य(?)वर्णभाक् ॥ ६७
श्वेतमांसासनं यानं सितमाल्यस्य धारणम् । श्वेतानां वाऽपि द्रव्याणां स्वप्ने दर्शनमुत्तमम् ॥ ६८
बलीवर्दयुतं यानं योऽभिरूढः प्रधावति । प्राचीं दिशमुदीचीं वा सोऽर्थलाभमवाप्नुयात् ॥ ६९
नग-वेश्म-पुराणां तु दीप्तानां तु शिरस्थितः । यः स्वप्ने मानवः सोऽपि महीं भोक्तुं विरामये[25]त् ॥ ७०
मृन्मयं(यां) नाग(व)मारूढः सागरे प्लवते हि[20] यः (सः) ।
तथैव च विबुध्येत सोऽचिराद् वसुधाधिपः ॥ ७१
पाण्डुराणि च वेश्मानि पुष्प-शाखा-फलान्वितात् । यो वृक्षात् पतति स्वप्ने स फलं चेष्टते सदा ॥ ७२
वासोभिर्हरितैः शुक्लैर्वेष्टितः प्रतिबुध्यते । दह्यते योऽग्निना वाऽपि बध्यमानो[28] विमुच्यते ॥ ७३
दुग्धतैल-घृतानां वा क्षीरस्य च विशेषतः । प्रशस्तं दर्शनं स्वप्ने भोजनं नं प्रशस्यते ॥ ७४
अङ्ग-प्रत्यङ्गयुक्तस्य शरीरस्य विवर्धनम् । प्रशस्तं[31] दर्शनं स्वप्ने नख-रोमविवर्धनम् ॥ ७५
उत्सङ्गः पूर्यते[33] स्वप्ने यस्य धान्यैर[34]निन्दितैः । फल-पुष्पैश्च संप्राप्तः प्राप्नोति महतीं श्रियम् ॥ ७६
कन्या याऽऽर्या[36]दि[37] वा कन्या रूपमेव(?) विभूषिता ।
प्रहृष्टां प(द)श्यते स्वप्ने लभते योषितः श्रियम् ॥ ७७
प्रश्रिष्यति यः शास्त्रैः[39] पृथिवीं पर्वतान् प्रति । शुभमारोहते यस्य सोऽभिषेकमवाप्नुयात् ॥ ७८

---

1 B दहने; D दशने । 2 A प्रणया वा; D प्रयाणा वा । 3-5 A not found in this Ms.
6-9 B सोऽभिप्रेतो दक्षतः; D सोऽभिप्रेणे यक्षतः । 10 B D सचित्तम् । 11 B D उदयं । 12 A D
विरूपा वा । * A this is not found in this Ms. † A स्वप्ने धरस्तपसं पण्डुरागं वा सव्यकपिलमेव
च । 13 D वापसं । 14 D पुण्डरागं । 15 D कपिलम् । 16-17 A समवाप्नुयात् । 18-19 B तद्रागं च;
D तद्रागस्य । 20 B नील.; D तालः । 21 A रोहति । 22 B D ग्रहः । 23 A D हृताहृति । 24 B D
सोभस्य । 25 B विरामय; D निरमय । 26-27 D हृतः । 28 A दह्यमान; B दह्यमानः । 29 A पस्य ।
30 A च । 31 A not found. 32 A °विवर्जनम् । 33 B पूज्यते । 34 A not found; B पर्ण्यैः ।
35-37 A B वा यदि । 38 A प्रहृष्या । 39 D शार्थः । 40 B वृषेकम् ।

